णाणं पंचविधं पिअ अण्णाणतिगं च सागरुवओगो
चदुदंसणमणगारो सव्वे तल्लक्खणा जीवा ३१

ज्ञानं पंचविधं अपि अज्ञानत्रिकं च साकारोपयोगः।
चतुर्दर्शनमनाकारः सर्वे तल्लक्षणा जीवाः ॥ ३१ ॥

णाणं–जानाति ज्ञायतेऽनेन ज्ञानमात्रं वा ज्ञानं वस्तुपरिच्छेदकं। तच्च पंचविहं–पंचप्रकारं मतिश्रुतावधिमनःपर्ययकेवलभेदेन। षट्त्रिंशत्त्रिशतभेदं चावग्रहेहावायधारणाभिः षडिन्द्रियाणि प्रगुणितानि तानि चतुर्विंशतिप्रकाराणि भवन्ति तत्र चतुर्षु व्यञ्जनावग्रहेषु प्रक्षिप्तेष्वष्टाविंशतिर्भवन्ति सा चाष्टाविंशतिर्बहुबहुविधक्षिप्रानिःसृतानुक्तध्रुवेतरभेदैर्द्वादशभिर्गुणिताः षट्त्रिंशत्त्रिशतभेदा भवन्ति मतिज्ञानमेतत्। श्रुतज्ञानमंगांगबाह्यभेदेन द्विविधं, अंगभेदेन द्वादशविधं पर्यायाक्षर-पद-संघात--प्रतिपत्तिकानुयोग -प्राभृतक-प्राभृतकप्राभृतक–वस्तु-पूर्वभेदेन विंशतिविधं च। अवधिज्ञानं देशावधि–परमावधि-सर्वावधिभेदतस्त्रिप्रकारं। मनःपर्ययज्ञानं ऋजुमति–विपुलमतिभेदेन द्विप्रकारं। केवलमेकमसहायं। अण्णाणतिगं–अज्ञानमयथात्मवस्तुपरिच्छित्तिस्वरूपं तस्य त्रयमज्ञानत्रयं मत्यज्ञानश्रुताज्ञान-विभंगज्ञानभेदेन संशयविपर्ययानध्यवसायाकिञ्चित्करादिभेदेन चानेकप्रकारं। सागरुवओगो–सहाकारेण व्यक्तयार्थेन वर्तत इति साकारः सविकल्पो गुणीभूतसामान्यविशेषग्रहणप्रवण उपयोगः। ज्ञानं पंचप्रका-

रमज्ञानत्रयं च साकार उपयोगः। चदुदंसणं—चत्वारि दर्शनानि चक्षुरचक्षुरवधिकेवलदर्शनभेदेन। अणगारो—अनाकारोऽविकल्पको गुणीभूतविशेषसामान्यग्रहणप्रधानः, चत्वारि दर्शनान्यनाकार उपयोगः। सव्वे—सर्वे। तल्लक्खणा—तौ ज्ञानदर्शनोपयोगौ लक्षणं येषां ते तल्लक्षणाः ज्ञानदर्शनोपयोगलक्षणाः सर्वे जीवा ज्ञातव्या इति ॥ ३१ ॥

जीवभेदोपसंहारादजीवभेदसूचनाय गाथा—

**एवं जीवविभागा बहुभेदा वण्णिया समासेण।**
**एवंविधभावरहियमजीवदव्वेत्ति विण्णेयं ॥३२॥**

एवं जीवविभागा बहुभेदा वर्णिताः समासेन।
एवंविधभावरहितमजीवद्रव्यमिति विज्ञेयं ॥ ३२ ॥

एवं—व्याख्यातप्रकारेण। जीवविभागा—जीवविभागाः। बहुभेदा—बहुप्रकाराः। वण्णिदा—वर्णिताः। समासेण—संक्षेपेण। एवंविधभावरहियं—व्याख्यातस्वरूपविपरीतमजीवद्रव्यमिति विज्ञेयम् ॥ ३२ ॥

अजीवभेदप्रतिपादनायाह—

**अज्जीवा विय दुविहा रूवारूवा य रूविणो चदुधा**
**खंधा य खंधदेसा खंधपदेसा अणू य तहा ॥३३॥**

अजीवा अपि द्विविधा रूपिणोऽरूपिणश्च रूपिणःचतुर्धा

स्कंधश्च स्कंधदेशः स्कंधप्रदेशः अणुश्च तथा ॥ ३३ ॥

अज्जीवा विय–अजीवाश्चाजीवपदार्थाश्च। दुविहा–द्विप्रकारा । रूवा–रूपिणो रूपरसगन्धस्पर्शवन्तो यतो रूपाविनाभाविनो रसादयस्ततो रूपग्रहणेन रसादीनामपि ग्रहणं। अरूवा य–अरूपिणश्च रूपादिवर्जिताः। रूविणो–रूपिणः पुद्गलाः। चदुधा–चतुःप्रकाराः। के ते चत्वारः प्रकारा इत्यत आह–खधाय–स्कन्धः। खंधदेसा–स्कन्धदेशः। खधपदेसा–स्कन्धप्रदेशः। अणूयतहा–अणुरपि तथा परमाणुः। रूप्यरूपिभेदेनाजीवपदार्था द्विप्रकाराः, रूपिणः पुनः स्कन्धादिभेदेन चतुःप्रकारा इति ॥ ३३ ॥

स्कन्धादिस्वरूपप्रतिपादनार्थमाह—

खंधं सयलसमत्थं तस्स दु अद्धं भणंति देसोत्ति ।
अद्धद्धं च पदेसो परमाणू चेय अविभागी॥३४॥

स्कंधः सकलसमर्थः तस्य तु अर्धं भणंति देश इति ।
अर्धार्धं च प्रदेशः परमाणुः चैव अविभागी ॥ ३४ ॥

खंधं–स्कन्धः। सयल–सह कलाभिर्वर्तते इति सकलं सभेदं परमाणुवन्तं। समत्थ–समस्तं सर्वं पुद्गलद्रव्यं। सभेदं स्कन्धः सामान्यविशेषात्मकं पुद्गलद्रव्यमित्यर्थः। अतो न सकलसमस्तयोः पौनरुक्त्यं। तस्स दु तस्य तु स्कन्धस्य। अद्धं–अर्धं सकलं। भणंति–वदन्ति। देसोत्ति–देश इति तस्य सम-

स्तस्य पुद्गलद्रव्यस्यार्धं देश इति वदन्ति जिनाः । अद्धद्धं च अर्धस्यार्धस्यार्धमर्धार्धं तत्समस्तपुद्गलद्रव्यार्धं तावदर्धेनार्धेन कर्तव्यं यावद् द्वयणुकस्कन्धः ते सर्वे भेदाः प्रदेशवाच्या भवन्ति । परमाणूचेव-परमाणुश्च । अविभागी-निरंशो यस्य विभागो नास्ति तत्परमाणुद्रव्यम् ॥ ३४ ॥

अरूपिद्रव्यभेदनिरूपणार्थमाह—

ते पुणु धम्माधम्मागासा य अरूविणो य तह कालो
खंधा देस पदेसा अणुत्ति विय पोग्गला रूवी ३५

ते पुनःधर्माधर्माकाशानि च अरूपीणि तथा कालः।
स्कंधः देशः प्रदेशः अणुरिति अपि च पुद्गला रूपिणः

ते पुणु-तच्छब्दः पूर्वप्रक्रान्तपरामर्शी ते पुनररूपिणोऽजीवाः।धम्माधम्मागासा य-धर्माधर्माकाशानि । किंलक्षणानि अरूविणोय-अरूपीणि रूपरसगन्धस्पर्शरहितानि । तहकालो -तथा कालश्चारूपी लोकमात्रः सप्तरज्जूनां घनीकृतानां यावन्तः प्रदेशास्तावत्परिमाणानि, अलोकाकाशं पुनरनन्तं । स्कन्धादयः के ते आह-स्कन्धदेशप्रदेशा अणुरिति च पुद्गलाः पूरणगलनसमर्थाः । रूवी-रूपिणो रूपरसगन्धस्पर्शवन्तोऽनन्तपरिमाणाः। ननु कालः किमिति कृत्वा पृथग्व्याख्यातश्चेत् नैष दोषः, धर्माधर्माकाशान्यस्तिकायरूपाणि कालः पुनरनस्तिकायरूप एकैकप्रदेशरूपः; निचयाभावप्रतिपादनाय पृथ-

न्व्याख्यात इति । रूपिणः पुद्गला इति ज्ञापनार्थं पुनः स्कं-धादिग्रहणमतो न पौनरुक्त्यं । धर्मादीनां च स्कन्धादिभेद-प्रतिपादनार्थं च पुनर्ग्रहणम् ॥ ३५ ॥

ननु यदेवार्थक्रियाकारि तदेव परमार्थं सत् तदेषां धर्मादीनां किं कार्यं ? केषामेतानि कारणान्यत आह—

**गदिठाणोग्गाहणकारणाणि कमसो दु वत्तणगुणोय**
**रूवरसगंधफासदि कारणा कम्मबंधस्स ॥ ३६ ॥**

गतिस्थानावगाहनकारणानि क्रमशः तु वर्तनागुणश्च
रूपरसगंधस्पर्शादि कारणं कर्मबंधस्य ॥ ३६ ॥

गदि–गतिर्गमनक्रिया । ठाणं–स्थानं स्थितिक्रिया । ओगाहण–अवगाहनमवकाशदानमेषां कारणाणि–निमित्तानि । कमसो–क्रमशः यथाक्रमेण । वत्तणगुणोय–वर्तनागुणश्च परिणामकारणं । गतेः कारणं धर्मद्रव्यं जीवपुद्गलाना । तथा तेषामेव स्थितेः कारणमधर्मद्रव्य । अवकाशदाननिमित्तमाकाशद्रव्य पंचद्रव्याणां । तथा तेषामपि वर्तनालक्षणं कालद्रव्यं स्वस्य च परमार्थकालग्रहणात् । धर्माधर्माकाशकालद्रव्याणि स्वपरिणामनिमित्तानि परेषां गत्यादीनां निमित्तान्यपि भवन्ति, अनेककार्यकारित्वाद् द्रव्याणां तस्मान्न विरोधो यथा मत्स्यः स्वगतेः कारणं, जलमपि च कारणं नक्रनेः, स्वगतेः कारणं पुरुषः सुखः पन्थाश्च । तथा स्वस्थितेः कारणं पुरुषः,

छायादिकं च कारणं। अथ रूपादयः कस्य कारणमिति चेत्, रूपरसगन्धस्पर्शादयः कारणं कर्मबन्धस्य, जीवस्वरूपान्यथानिमित्तकर्मबन्धस्योपादनहेतवः रूपादिवन्तः पुद्गलाः । कथं पुद्गला इति लभ्यन्ते, तेनाभेदोपचारात् तात्स्थ्याद्वा बन्धः पुद्गलरूपो भवतीत्यर्थः ॥ ३६ ॥

कर्मबन्धो द्विधा पुण्यपापभेदादतस्तत्स्वरूपं तन्निमित्तं च प्रतिपादयन्नाह—

**सम्मत्तेण सुदेण य विरदीए कसायणिग्गहगुणेहिं**
**जो परिणदो स पुण्णो तव्विवरीदेण पावं तु ॥ ३७**

सम्यक्त्वेन श्रुतेन च विरत्या कपायनिग्रहगुणैः ।
यः परिणतस्तत्पुण्यं तद्विपरीतेन पापं तु ॥ ३७ ॥

सम्यक्त्वेन, श्रुतेन, विरत्या पंचमहाव्रतपरिणत्या, तथा कपायनिग्रहगुणैरुत्तमक्षमामार्दवार्जवसन्तोषगुणैः चशब्दादिन्द्रियनिरोधैश्च जो परिणदो-यः परिणतो जीवस्तस्य यत्कर्मसंश्लिष्टं तत्पुण्यमित्युच्यते, अथवा सम्यक्त्वादिगुणपरिणतो जीवोऽपि पुण्यमित्युच्यते अभेदात् । अथवा सम्यक्त्वादिकारणेन यः कर्मबन्धः स पुण्यमित्युच्यते। तव्विवरीदेण-तद्विपरीतेन मिथ्यात्वाज्ञानासंयमकषायगुणैर्यः, परिणत पुद्गलनिचयस्तत्पापमेव । शुभप्रकृतयः पुण्यमशुभप्रकृतयःपापमिति पुण्यपापासूत्रकौ जीवौ वानेन व्याख्यातौ, ॥ ३७ ॥

इत ऊर्ध्वं पुण्यपापास्रवकारणमाह—

**पुण्णस्सासवभूदा अणुकंपा सुद्ध एव उवओगो।**
**विवरीदं पावस्स दु आसवहेउं वियाणाहि ३८**

पुण्यस्यास्रवभूता अनुकंपा शुद्ध एव उपयोगः।
विपरीतः पापस्य तु आस्रवहेतुं विजानीहि ॥ ३८ ॥

पुण्यस्य सुखनिमित्तपुद्गलस्कन्धस्यास्रवभूता आस्रव-त्यागच्छत्यनेनेत्यास्रवः आस्रवणमात्रं वास्रवः आस्रव-भूता द्वारभूता कारणरूपा अनुकम्पा कृपा दया शुद्धो पयोगश्च शुद्धमनोवाक्कायक्रिया इत्यर्थः शुद्धज्ञानदर्शनोपयो गश्चाभ्यामनुकम्पाशुद्धोपयोगाभ्यां । विवरीदं–विपरीतोऽ-ननुकम्पाऽ शुद्धमनोवाक्कायक्रियाः मिथ्याज्ञानदर्शनोपयोगः। पावस्स दु–पापस्यैव । आसव–आस्रव आगमहेतुस्तमास्रवहे तुं । वियाणाहि विजानीहि बुध्यस्व । पूर्वगाथार्थेनास्य गाथा र्थस्य नैरर्थं बन्धास्रवोपकारेण प्रतिपादनात् पूर्वं कारणैः पुण्यबन्धः पापबन्धश्च व्याख्यातः, आभ्यां पुनः कारणा भ्यां शुभास्रवः शुभकर्मागमोऽशुभास्रवोऽशुभकर्मागमो व्याख्यातः । पुण्यस्यागमनहेतू अनुकम्पाशुद्धोपयोगौ जानी हि, पापागमस्य तु विपरीतावननुकम्पाऽशुद्धोपयोगौ हेतू विजा-नीहीति ॥ ३८ ॥

ननु जीवप्रदेशानाममूर्तानां कथं कर्मपुद्गलैर्मूर्तैः सह

सम्बन्धोऽत आह—

**णेहोउप्पिदगत्तस्स रेणुओ लग्गदे जधा अंगे।**
**तह रागदोससिणेहोल्लिदस्स कम्मं मुणेयव्वं ३९**

स्नेहार्पितगात्रस्य रेणवो लगंति यथा अंगे ।
तथा रागद्वेपस्नेहालिप्तस्य कर्म ज्ञातव्यं ॥ ३९ ॥

स्नेहो घृतादिकं तेनार्द्रीकृतस्य गात्रस्य शरीरस्य रेणवः पासवो लगन्ति सश्रयंति यथा तथा रागद्वेपस्नेहार्द्रस्य जीवस्यांगे शरीरे कर्मपुद्गला ज्ञातव्यास्तैजसकार्मणयोः शरीरयोः सतोरित्यर्थः। रागः स्नेहः, कामादिपूर्विका रतिः, द्वेषोऽप्रीतिः क्रोधादिपूर्विकाऽरतिरिति ॥ ३९ ॥

तद्विपरीतेन पापस्यास्रव इत्युक्तं तन्मुख्यरूपेण किमित्यतः आह-

**मिच्छत्तं अविरमणं कसायजोगा य आसवा होंति**
**अरिहंतवुत्तअत्थेसु विमोहो होइ मिच्छत्तं ४०**

मिथ्यात्वं अविरमणं कपाययोगौ च आश्रवा भवंति।
अर्हदुक्तार्थेपु विमोहः भवति मिथ्यात्वं ॥ ४० ॥

मिथ्यात्वमविरमणं कपाया योगश्चैते आस्रवा भवन्ति। अथ मिथ्यात्वस्य किं लक्षणमित्यत आह—अर्हदुक्तार्थेषु सर्वज्ञभाषितपदार्थेषु विमोहः संशयविपर्ययानध्यवसायरूपो मिथ्यात्वमिति भवति ॥ ४० ॥

अविरमणादीन्प्रतिपादयन्नाह—

**अविरमणं हिंसादी पंचवि दोसा हवंति णादव्वा**
**कोधादी य कसाया जोगो जीवस्स चेट्ठा दु ४१**

अविरमणं हिंसादयः पंचापि दोषा भवंति ज्ञातव्याः
क्रोधादयः कषाया योगः जीवस्य चेष्टा तु ॥ ४१ ॥

हिंसादयः पंचापि दोषाः हिंसासत्यस्तेयाब्रम्हपरिग्रहा अविरमणं ज्ञातव्यं भवति । क्रोधमानमायालोभाः कषायाः । जीवस्य चेष्टा तु योगः ॥ ४१ ॥

संवरपदार्थस्य व्याख्यानायाह—

**मिच्छत्तासवदारं रुंभइ सम्मत्तदढकवाडेण ।**
**हिंसादिदुवाराणिवि दढवदफलिहेहिं रुन्भंति४२**

मिथ्यात्वास्रवद्वारं रुंधंति सम्यक्त्वदृढकपाटेन ।
हिंसादिद्वाराण्यपि दृढव्रतफलकैः रुंधंति ॥ ४२ ॥

मिथ्यात्वमेवास्रवद्वारं मिथ्यात्वास्रवद्वारं—रुन्भन्ति रुंधन्ति निवारयन्ति । सम्मत्तदढकवाडेण–सम्यक्त्वमेव दृढकपाटं तेन सम्यक्त्वदृढकपाटेन तत्त्वार्थश्रद्धानविधानेन हिंसादीनि द्वाराणि दृढव्रतफलकै रुन्धन्ति संच्छादयन्तीति ॥४२॥

**आसवदि जंतु कम्मं कोधादीहिं तु अयदजीवाणं**
**तप्पडिवक्खेहिं विदु रुंभंति तमप्पमत्ता दु॥४३॥**

आस्रवति यत्तु कर्म क्रोधादिभिस्तु अयतजीवानाम् ।
तत्प्रतिपक्षैः विद्वांसो रुंधंति तमप्रमत्तास्तु ॥ ४३ ॥

क्रोधादिभिर्यत्कर्मास्रवत्युपढौक्तेऽयत्नपरजीवानां तत्प्रतिपक्षैस्तत्प्रतिकूलैः क्षमादिभिरप्रमत्ताः प्रमादरहिता विद्वांसो रुन्धन्ति प्रतिकूलयन्ति । अनेन संवारको जीवो व्याख्यात इति ॥ ४३ ॥

आस्रवसंवरसमुच्चयप्रतिपादनायोत्तरगाथा संवरकारणाय वा—

मिच्छत्ताविरदीहि य कसायजोगेहिं जं च आसवदि
दंसणविरमणणिग्गहणिरोधणेहिं तु णासवदि ॥
मिथ्यात्वाविरतिभिश्च कषाययोगैश्च यच्च आसूवति।
दर्शनविरमणानिग्रहनिरोधनैस्तु नासूवति ॥ ४४ ॥

मिथ्यात्वाविरतिकषाययोगैर्यत्कर्मास्रवति, दर्शनविरतिनिग्रहनिरोधनैस्तु नास्रवति । न च पूर्वगाथानां पौनरुक्त्यं बन्धास्रवसंवरभेदेन व्याख्यानाद् द्रव्यार्थिकपर्यायार्थिकशिष्यसंग्रहाद्वा ॥ ४४ ॥

निर्जरार्थप्रतिपादनायोत्तरप्रबन्धः—

संयमजोगे जुत्तो जो तवसा चेट्ठदे अणेगविधं ।
सो कम्मणिज्जराए विउलाए वट्टदे जीवो ॥ ४५ ॥
संयमयोगेन युक्तः यः तपसा चेष्टते अनेकविधं ।

स कर्मनिर्जरायां विपुलायां वर्तते जीवः ॥ ४५ ॥

निर्जरकनिर्जरानिर्जरोपायास्तत्र निर्जरकः किंविशिष्ट इत्यत आह–सयमो द्विविध इन्द्रियसंयमः प्राणसंयमश्च । जोगे–योगः यत्नः शुभमनोवचनकायो ध्यान वा । सयम योगयुक्तो यस्तपसा तपसि वा चेष्टते प्रवर्ततेऽनेकविधे द्वादशविधे वा, द्वादशविधं तपो यः करोति यत्नपरः स कर्मनिर्जराया कर्मविनाशे वर्तते जीवः । अनेन निर्जरोपायश्च व्याख्यातः । पूर्वसूत्रेष्वप्येवं व्याख्येय, बन्धको बन्धो बन्धोपायः । आवसक आस्रव आस्रवोपायः । सवरकः संवरः सवरोपायः । अनेन व्याख्यानेन पौनरुक्त्य च न भवतीति ॥ ४५ ॥

दृष्टान्तद्वारेण जीवकर्मणोः शुद्धिमाह—

जह धाऊ धम्मंतो सुज्झदि सो अग्गिणा दु संतत्तो
तवसा तधा विसुज्झदि जीवो कम्मेहिं कणयं व ॥

यथा धातुः धम्यमानः शुद्ध्यति स अग्निना तु संतप्तः
तपसा तथा विशुद्ध्यति जीवः कर्मभिः कनकं इव ४६

यथा धातुपाषाणः कनकोपलो धम्यमानस्ताप्यमानः शुद्ध्यते सोऽग्निना तु संतप्तो दग्धः किट्टकालिकादिरहितः सजायते, तथा तपसा विशुद्ध्यते जीवः कर्मभि कनकमिव ।

यथा धातुः कनकं अग्निसंयोगेन शुद्धं भवति, तथा तपोयोगेन जीवः शुद्धो भवति ॥ ४६ ॥

किमर्थं सकारणा निर्जरा व्याख्याता बन्धादयश्च सहेतवः नित्यपक्षेऽनित्यपक्षे च किमर्थमिति । तत्सर्वं न घटते यतः कुतः ?

**जोगा पयडिपदेसा ठिदिअणुभागं कसायदो कुणदि**
**अपरिणदुच्छिण्णेसु य बंधट्ठिदिकारणं णत्थि ४७**

*योगात् प्रकृतिप्रदेशौ स्थित्यनुभागौ कषायतः करोति*
*अपरिणतोच्छिन्नेषु च बंधस्थितिकारणं नास्ति ॥४७॥*

चतुर्विधो बन्धः प्रकृतिस्थित्यनुभागप्रदेशभेदेन, कार्मणवर्गणागतपुद्गलानां ज्ञानावरणादिभावेन परिणामः प्रकृतिबन्धः । तेषां कर्मस्वरूपपरिणतानामनन्तानन्तानां जीवप्रदेशैः सह संश्लेषः प्रदेशबन्धः । तेषां जीवप्रदेशानुश्लिष्टानां जीवस्वरूपान्यथाकरणरसोऽनुभागबन्धः । तेषामेव कर्मरूपेण परिणतानां पुद्गलानां जीवप्रदेशैः सह यावत्कालमवस्थितिः स स्थितिबन्धः । योगाज्जीवः प्रकृतिबन्धं प्रदेशबन्धं च करोति । कषायेण स्थितिबन्धमनुभागबन्धं च करोति । अथवा योगः प्रकृतिबन्धं प्रदेशबन्धं च करोति । कषायाः स्थितिबन्धमनुभागबन्धं च कुर्वन्ति । यतोऽतोऽपरिणतस्य नित्यस्य, उच्छिन्नस्य निरन्वयक्षणिकस्य च बन्धस्थितेः कारणं नास्ति । अथवाऽयमभिसम्बन्धः कर्तव्यो

मिथ्यादृष्ट्याद्युपशान्तानामेतद् व्याख्यानं वेदितव्यं । कुतो यतो योगः प्रकृतिप्रदेशबन्धौ करोति कषायाश्च स्थित्यनुभागौ कुर्वन्ति, अतोऽ परिणतयोरयोगिसिद्धयोः सयोग्ययोगिनोर्वोच्छिन्नस्य क्षीणकषायस्य च बन्धस्थितेः कारणं नास्ति । ननु क्षीणकषायसयोगिनोर्योगोऽस्ति, सत्यमस्ति, किंतु तस्याकिञ्चित्करत्वादभाव एवेति ॥ ४७ ॥

निर्जराभेदार्थमाह—

पुव्वकदकम्मसडणं तु णिज्जरा सा पुणो हवे दुविहा
पढमा विवागजादा विदिया अविवागजादा य
पूर्वकृतकर्मसटनं तु निर्जरा सा पुनर्भवेत् द्विविधा ।
प्रथमा विपाकजाता द्वितीया अविपाकजाता च ४८॥

अथ का निर्जरा ? पूर्वकृतकर्मसटनं गलनं निर्जरेत्युच्यते सा पुनर्निर्जरा द्विविधा द्विप्रकारा भवेत् । प्रथमा विपाकजातोदयस्वरूपेण कर्मानुभवनं । द्वितीया निर्जरा भवेदविपाकजातानुभवमन्तरेणैकहेल्या कारणवशात् कर्मविनाशः ॥ ४८ ॥

विपाकजाताविपाकजातयोर्निर्जरयोर्दृष्टान्तद्वारेण स्वरूपमाह-

कालेण उवाएण य पच्चंति जधा वणप्फदिफलाणि
तध कालेण उवा[1]एण य पच्चंति कदाणि कम्माणि ४९
कालेन उपायेन च पच्यंते यथा वनस्पतिफलानि ।

---

१ 'तवेण य' इत्यपि पाठः।

तथा कालेन उपायेन च पच्यंते कृतानि कर्माणि ४९

यथा कालेन क्रमपरिणामेनोपायेन च यवगोधूमादेर्वनस्पतेः फलानि पच्यन्ते तथा कालेनोदयागतगोपुच्छैरुपायेन च सम्यक्त्वज्ञानचारित्रतपोभिः कृतानि कर्माणि पच्यन्ते विनश्यन्ति ध्वस्तीभवन्तीत्यर्थः ॥ ४९ ॥

मोक्षपदार्थं निरूपयन्नाह—

रागी बंधइ कम्मं मुच्चइ जीवो विरागसंपण्णो।
एसो जिणोवएसो समासदो बंधमोक्खाणं ५०

रागी बध्नाति कर्माणि मुंचति जीवः विरागसंपन्नः।
एप जिनोपदेशः समासतः बंधमोक्षयोः ॥५०॥

अत्रापि मोचको मोक्षो मोक्षकारणं च प्रतिपादयति बन्धस्य च बन्धपूर्वकत्वान्मोक्षस्य। रागी बध्नाति कर्माणि वीतरागः पुनर्जीवो मुच्यते। एप जिनोपदेशः आगमः समासतः सक्षेपात् कयोर्बन्धमोक्षयोः। संक्षेपेणायमुपदेशो जिनस्य, रागी बध्नाति कर्माणि वैराग्यं संप्राप्तः पुनर्मुच्यते इति॥ ५०

अथ पदार्थान् संक्षेपयन् प्रकृतेन च योजयन्नाह—

णव य पदत्था एदे जिणदिट्ठा वण्णिदा मए तच्चा
एत्थ भवे जा संका दंसणघादी हवदि एसो ५१॥

नव च पदार्था एते जिनदिष्टा वर्णिता मया तत्त्वं।

तत्र भवेत् या शंका दर्शनघाती भवति एषः ॥५१ ॥

अथ का शंका नाम, एते ये व्याख्याता नवपदार्था जिनोपदिष्टाः, अनेन किमुक्तं भवति वक्तुः प्रामाण्याद्वचनस्य प्रामाण्यं, वर्णिता व्याख्याता मया तच्चा–तत्त्वभूताः, जिनमतानुसारेण मयानुवर्णिता इत्यर्थः । एत्यभवे–एतेषु पदार्थे षु भवेत् यस्य शंका स जीवो दर्शनघात्येष मिथ्यादृष्टिः । अथवा शंका सन्दिग्धाभिप्राया सैषा दर्शनघातिनी स्यात् ।

किमेते पदार्था नित्या आहोस्विदनित्याः, किं सन्त आहोस्विदविद्यमानाः, यथैते वर्णिता एतैरन्यैरपि बुद्धकणादाक्षपादादिभिश्च वर्णिता न ज्ञायन्ते के सत्या इति संशयो दर्शनविनाशहेतुरिति शंकां प्रतिपाद्याकांक्षां निरूपयन्नाह–

तिविहा य होइ कंखा इह परलोए तधा कुधम्मे य
तिविहं पि जो ण कुज्जा दंसणसुद्धीमुपगदो सो ॥

त्रिविधा च भवति कांक्षा इह परलोके तथा कुधर्मे च।
त्रिविधमपि यः न कुर्यात् दर्शनशुद्धिमुपगतः सः ५२

त्रिविधा भवति कांक्षाभिलाष इह लोकविषया परलोकविषया तथा कुधर्मविषया च । इहलोके मम यदि गजतुरगद्रव्यपशुपुत्रकलत्रादिकं भवति तदानीं शोभनोऽयं धर्मः । परलोके चैतन्मम स्यात्, भोगा मे सन्तु लोकधर्मश्च शोभनः सर्वेषू

व्यस्तमहमपि करोमीति कांक्षा। तां त्रिप्रकारामपि यो न कुर्यात् स जीवो दर्शनशुद्धिमुपगतः। कांक्षामन्तरेण यदि सर्वं लभ्यते किमिति कृत्वा काङ्क्षा क्रियते। नियते च सर्वैः काङ्क्षावानिति।

इह लोकाकाङ्क्षां परलोकाकांक्षां च प्रतिपादयन्नाह—

**बलदेवचक्कवट्टीसेट्ठीरायत्तणादिअहिलासो।**
**इहपरलोगे देवत्तपत्थणा दंसणाभिघादी सो ५३**

बलदेवचक्रवर्तिश्रेष्ठिराजत्वाद्यभिलाषः।
इहपरलोके देवत्वप्रार्थना दर्शनाभिघाती सः ५३

बलदेवचक्रवर्तिश्रेष्ठ्यादीनां राज्य भिलाप इहलोके यो भवति सेहलोकाकाङ्क्षा। परलोके च स्वर्गादौ देवत्वप्रार्थना यस्य स्यात् दर्शनाभिघाती सः। इहलोके षट्खण्डाधिपतित्वं, बलदेवत्वं, राजश्रेष्ठित्वं, परलोके इन्द्रत्वं, सामान्यदेवत्वं, महर्द्धिकत्वं, स्वस्वरूपत्वमित्येवमादि प्रार्थयन् मिथ्यादृष्टिर्भवति, निदानशल्यत्वात्कांक्षयेति ॥ ५३ ॥

कुधर्मकांक्षास्वरूपमाह—

**रत्तवडचरगतावसपरिहत्तादीणमण्णतित्थीणं।**
**धम्मह्मि य अहिलासो कुधम्मकंखा हवदि एसा ॥**

रक्तपटचरकतापसपारिव्राजादीनामन्यतैर्थिकानां।

धर्मे च अभिलापः कुधर्मकांक्षा भवति एषा ॥ ५४ ॥

रक्तपट--चरक--तापस--परिव्राजकादीनामन्यतीर्थिकानां धर्मविषये योऽभिलापः कुधर्मकांक्षैषा भवति । चत्वारो रक्तपटा वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदात् । नैयायिकवैशेषिकदर्शने चरकशब्देनोच्येते कणचरादिर्वा । कन्दफलमूलाद्याहारा भस्मोद्धूलनपरा जटाधारिणो विनयपरास्तापसाः । सांख्यदर्शनस्थाः पंचविंशतितत्त्वज्ञाः परिव्राजकशब्देनोच्यन्ते इत्येवमाद्यन्येष्वपि तैर्थिकमतेष्वभिलापः कुधर्मकांक्षेति । कथमेषां कुधर्मत्वं चेत् पदार्थानां तदीयानां विचार्यमाणानामयोगात्सर्वथा नित्यक्षणिकोभयत्वात् । इन्द्रियसंयमप्राणसंयमजीवविज्ञानपदार्थसर्वज्ञपुण्यपापादीनां परस्परविरोधाच्चेति ॥ ५४ ॥

विचिकित्सास्वरूपमाह—

विदिगिंच्छा वि य दुविहा
दव्वे भावे य होइ णायव्वा ।
उच्चारादिसु दव्वे
खुधादिए भावविदिगिंछा ५५

विचिकित्सापि च द्विविधा
द्रव्ये भावे च भवति ज्ञातव्या ।

उच्चारादिषु द्रव्येषु
क्षुधादिके भावविचिकित्सा ॥

विचिकित्सापि द्विप्रकारा द्रव्यभावभेदात् भवति ज्ञातव्या उच्चारप्रश्रवणादिषु मूत्रपुरीषादिदर्शने विचिकित्सा द्रव्यगता क्षुदादिषु क्षुत्तृष्णानग्नत्वादिषु भावविचिकित्सा व्याधितस्य वान्यस्य वा यतेर्मूत्राशुचिच्छर्दिश्लेष्मलालादिकं यदि दुर्गन्धिविरूपमिति कृत्वा घृणां करोति वैयावृत्यं न करोति स द्रव्यविचिकित्सायुक्तः स्यात् । सर्वमेतच्छोभनं क्षुधातृष्णानग्नत्वेन केशोत्पाटनादिना च दुःखं भवति एतद्विरूपकमित्येवं भावविचिकित्सेति ॥ ५५ ॥

द्रव्यविचिकित्साप्रपंचनार्थमाह—

**उच्चारं पस्सवणं खेलं सिंघाणयं च चमठ्ठी ।**
**पूयं च मंससोणिदवंतं जल्लादि साघूणं ॥ ५६ ॥**

उच्चारं प्रस्रवणं श्लेष्मा सिंघानकं च चर्मास्थि ।
पूतिं च मांसशोणितवांतं जल्लादि साधूनाम् ॥

उच्चारं, प्रश्रवणं, खेलं–श्लेष्मा, सिंहानकं, चर्म, अस्थि-पूयं च क्लिन्नरुधिरं, मांसं, मलं, शोणितं, वान्तं जल्लं सर्वांगीन मलं, अंगैकदेशाच्छादकं, लालादिकं च साधूनामिति ॥ ५६ ॥

भावविचिकित्सां प्रपंचयन्नाह—

छुहतण्हा सीदुण्हा दंसमसयमचेलभावो य।
अरदिरदिइत्थिचरियाणिसीधिया सेज्जअक्कोसो
बधजायणं अलाहो रोग तणफास जल्लसक्कारो
तह चेव पण्णपरिसह अण्णाणमदंसणं खमणं ॥

क्षुत्तृष्णा शीतोष्णं दंशमशकमचेलभावश्च।
अरतिरती स्त्रीचर्या निषद्या शय्या आक्रोशः॥
बधयाचनं अलाभो रोगस्तृणस्पर्शः जल्लं सत्कारः।
तथा चैव प्रज्ञापरीषहः अज्ञानमदर्शनं क्षमणं ॥

छुह–क्षुत् चारित्रमोहनीयवीर्यान्तरायापेक्षाऽसातावेदनीयोदयादशनाभिलाषः। तण्हा—तृषा चारित्रमोहनीयवीर्यान्तरायापेक्षाऽसातावेदनीयोदयादुदकपानेच्छा। सीद शीतं तद्द्वयापेक्षाऽसातोदयात्प्रावरणेच्छाकारणपुद्गलस्कंधः। उण्हा—उष्णं पूर्वोक्तप्रकारेण सन्निधानाच्छीताभिलाषकारणादित्यज्वरादिसन्तापः। दंसमसयं—दंशाश्च मशकाश्च दंशमशकं दंशमशकैः खाद्यमानस्य शरीरपीडा दंशमशकमित्युच्यते कार्ये कारणोपचारात्। अचेलभावो य–अचेलकत्वं नाग्न्यमिति यावत् अरदिरदि-अरतिरती चारित्रमोहोदयात् चारित्रद्वेषासंयमाभिलाषौ। इत्थि—स्त्रीकटाक्षेक्षणादिभिर्योपिद्बाधा कार्ये कारणोपचारात्। चरिया—चर्या आवश्यकाद्यनुष्ठानपरम्याति-

श्रान्तस्याप्युपानत्कादिरहितस्यापि मार्गयानं । निसीधिया—निषिद्या श्मशानोद्यानशून्यायतनादिषु वीरासनोत्कुटिकाद्यासनजनितपीडा । सेज्जा–शय्या स्वाध्यायध्यानाध्वश्रमपरिखेदितस्य खरविषमप्रचुरशर्कराद्याकीर्णभूमौ शयनस्यैकपार्श्वे दण्डशयनादिशय्याकृतपीडा । अक्कोसो—आक्रोशस्तीर्थयात्राद्यर्थपर्यटतः मिथ्यादृष्टिविमुक्तावज्ञासंघनिन्दावचनकृताबाधा । वह—वधः मुद्गरादिप्रहरणकृतपीडा । जायणं–अयाञ्चा अकारोत्र लुप्तो द्रष्टव्यः प्राणात्ययेऽपि रोगादिभिः पीडितस्यायाचयतः अयाञ्चापीडा । अथवा वरं मृतो न कश्चिद्याचितव्यः शरीरादिसंदर्शनादिभिः यांचा तु नाममहापीडा अलाहो अलाभः अंतरायकर्मोदयादाहाराद्यलाभकृतपीडा।।रोय रोगो ज्वरकासभगन्दरादिजनितव्यथा । तणफास–तृणस्पर्शः शुष्कतृणपरुषशर्कराकण्टकनिशितमृत्तिकाकृतशरीरपादवेदना । जल्ल—सर्वांगीणं मलमस्नानादिजनितप्रस्वेदाद्युद्भवा पीडा । सक्कारो–सत्कारः पूजाप्रशंसात्मकः । पुरस्कारो नमनक्रियारम्भादिष्वग्रतः करणमामंत्रणं । तह चेव–तथा चैव । पण्ण–प्रज्ञा विज्ञानमदोद्भूतगर्वः । परिसह–परीषहः । पीडाशब्दः सर्वत्रापि सम्बध्यते । क्षुत्परिषहः, तृणपरिषहः, दंशमशकपिपीलिकामत्कुणादिभक्षणपरीषह इत्यादि । अण्णाणं–अज्ञानं सिद्धान्तव्याकरणतर्कादिशास्त्रापरिज्ञानोद्भूतमनःसन्तापः । अदंसणं–अदर्शनं महाव्रतानुष्ठानेनाप्यद्याप्यतिशयबाधा, उपलक्षणमात्रमेतत् अन्येप्यत्र पीडाहेतवो द्रष्टव्याः ।

एतैः परीषहैर्व्रताद्यभंगेऽपि संक्लेशकरणं भावविचिकित्सा। खमणं—क्षपणं सहन तत्प्रत्येकमभिसम्बध्यते क्षुत्परीषहक्षमणं तृणपरीषहक्षमणमित्यादि। ततः परीषहजयो भवति ततश्च भावविचिकित्सा दर्शनमलं निराकृतं भवतीति॥ ५७–५८॥

दृष्टिमोहमर्पचनार्थमाह—

लोइयवेदियसामाइएसु तह अण्णदेवमूढत्तं।
णच्चा दंसणघादी ण य कायव्वं ससत्तीए॥ ५९

लौकिकवैदिकसामायिकेषु तथा अन्यदेवमूढत्वं।
ज्ञात्वा दर्शनघाती न च कर्तव्यं सर्वशक्त्या॥ ५९॥

लोइय—लोकः ब्राह्मणक्षत्रियवैश्यशूद्रास्तस्मिन् भवो लौकिकः आचार इति सम्बन्धः। वेदेषु सामऋग्यजुःषु भवो वैदिकः आचारः। समयेषु नैयायिकवैशेषिकबौद्धमीमांसककापिललोकायतिकेषु भव आचारः सामयिकस्तेषु लौकिकवैदिकसामयिकेषु आचारेषु क्रियाकलापेषु तथान्यदेवकेषु मूढत्व—मूढत्वं मोहः परमार्थरूपेण ग्रहणं तद्दर्शनं घाति। सम्यक्त्वविनाशं ज्ञात्वा तस्मात्तन्मूढत्वं सर्वशक्त्या न कर्तव्य॥ ५९॥

लौकिकमूढत्व [ त्व ] प्रपंचनार्थमाह—

कोडिलमासुरक्खा भारहरामायणादि जे धम्मा
होज्जु व तेसु विसुत्ती लोइयमूढो हवदि एसो ६०

कौटिल्यमासुरक्षः भारतरामायणादयो ये धर्माः।
भवेत् वा तेषु विश्रुतिः लौकिकमूढः भवति एषः ६०

कोडिल्ल—कुटिलस्य भावः कौटिल्यं तदेव प्रयोजनं यस्य धर्मस्य सः कौटिल्यधर्मः ठकादिव्यवहारो लोकप्रतारणाशीलो धर्मः परलोकाद्यभावप्रतिपादनपरो व्यवहारः। आसुरक्खा—असवः प्राणास्तेषां छेदनभेदनताडनत्रासनोत्पाटनमारणादिप्रपंचेन वञ्चनादिरूपेण वा रक्षा यस्मिन् धर्मे स आसुरक्षो धर्मो नगराद्यारक्षिकोपायभूतः। अथवा कौटिल्यधर्मः, इंद्रजालादिकं पुत्रबन्धुमित्रपितृमातृस्वाम्यादिघातनोपदेशः, चाणक्योद्भव आसुरक्षः मद्यमांसखादनाद्युपदेशः। बलाधानरोगाद्यपनयनहेतुः वैद्यधर्मः। भारतरामायणादिकाः पंचपाण्डवानामेका योषित्, कुंतिश्च पञ्चभर्तृका, विष्णुश्च सारथिः, रावणादयो राक्षसाः, हनुमानादयश्च मर्कटाः इत्येवमादिका असद्धर्मप्रतिपादनपरा ये धर्मास्तेषु या भवेद्विश्रुतिर्विपरिणामः एतेपि धर्मा इत्येवं मूढो लौकिकमूढो भवत्येष इति ॥ ६० ॥

वैदिकमोहप्रतिपादनार्थमाह—

ऋव्वेदसामवेदा वागणुवादादिवेदसत्थाइं।
तुच्छाणित्ताणि गेण्हइ वेदियमूढो हवदि एसो ॥

ऋग्वेदसामवेदौ वागनुवादादि वेदशास्त्राणि।

तुच्छानि तानि गृह्णाति वैदिकमूढो भवति एषः ॥

रिव्वेद-ऋग्वेदः। सामवेदः। वाग-वाक्, ऋचः। आणुवाग्-अनुवाक् कंडिकासमुदायः। अथवा वाग्--ऋग्वेदमतिवद्धमायश्चित्तादिः, अनुवाक्-मन्वादिस्मृतयः। आदिशब्देन यजुर्वेदाथर्वणादयः परिगृह्यन्ते। वेदसत्थाइं-वेदशास्त्राणि हिंसोपदेशकानि अन्याविकार्यप्रतिपादकानि गृह्यसूत्रारण्यगर्भाधानपुंसवननामकर्मान्नप्राशनचौलोपनयनव्रतबन्धनसोमयागादिप्रतिपादकानि नन्दिकेशरगौतमयाज्ञवल्क्यपिप्पलादवररुचिनारदबृहस्पतिशुक्रबुद्धादिप्रणीतानि तुच्छानि धर्मरहितानि निरर्थकानीति यदि न गृह्णन्ति [ यदि गृह्णाति ] तदासौ वैदिकाचारमूढो भवत्येष इति ॥ ६१ ॥

सामायिकमोहप्रतिपादनार्थमाह--

**रत्तवडचरगतावसपरिहत्तादीय अण्णपासंडा ।**
**संसारतारगत्ति य जदि गेण्हइ समयमूढो सो ६२**

रक्तपटचरकतापसपरिव्राजकादयः अन्यपाषंडाः ।
संसारतारका इति च यदि गृह्णाति समयमूढः सः ॥

रत्तवड-रक्तपटः । चरग-चरकः । काजवादेन षण भिक्षाहाराः, अथवा भिक्षार्थे गृहे हस्तलेहनशीला दक्षिणाः कालमुखादयः। तावसा-तापसाः कन्दमूलफलाद्याहारा वनवासिनः जटाकौपीनादिधारिणः । परिहत्ता-परिव्राजका

एकदण्डित्रिदण्ड्यादयः स्नानशीलाः शुचिवादिनः। आदि-शब्देन शैव-पाशुपति-कापालिकादयः परिगृह्यन्ते। ( अथवा पासंडा— )। एते लिंगिनः संसारतारकाः शोभनानुष्ठाना यद्येवं गृह्णाति समयमूढोऽसाविति ॥ ६२ ॥

देवमोहप्रतिपादनार्थमाह—

**ईसरबंभाविण्हूअज्जाखंदादिया य जे देवा।**
**ते देवभावहीणा देवत्तणभावणे मूढो ॥ ६३ ॥**

ईश्वरब्रह्माविष्णुआर्यास्कंदादयश्च ये देवाः।
ते देवभावहीना देवत्वभावने मूढः ॥ ६३ ॥

ईश्वर-ब्रह्म-विष्णु-भगवती-स्वामिकार्तिकादयो ये देवा-स्ते देवभावहीनाः चतुर्णिकायदेवस्वरूपेण सर्वज्ञत्वेन च रहितास्तेषूपरि यदि देवत्वपरिणामं करोति तदानीं देवत्व-भावेन मूढो भवतीत्यर्थः ॥ ६३ ॥

उपगूहनस्वरूपप्रतिपादनार्थमाह—

**दंसणचरणविवण्णे जीवे दट्ठूण धम्मभत्तीए।**
**उपगूहणं करिंतो दंसणसुद्धो हवदि एसो ॥ ६४**

दर्शनचरणविपन्नान् जीवान् दृष्ट्वा धर्मभक्त्या।
उपगूहनं कुर्वन् दर्शनशुद्धो भवति एषः ॥ ६४ ॥

दर्शनचरणविपन्नान् सम्यग्दर्शनचारित्रम्लानान् जीवान्

दृष्ट्वा धर्मभक्त्या वानुपगूहयन् उज्जलयन् संवरयन्नाप्-
तेषामुपगूहनं संवरणं कुर्वन् दर्शनशुद्धो भवत्येष उपगूहना-
कर्तेति ॥ ६४ ॥

स्थिरीकरणस्वरूपं प्रतिपादनायाह—

दंसणचरणुवभट्ठे जीवे दट्ठूण धम्मबुद्धीए।
हिदमिदमवगूहिय ते खिप्पं तत्तो णियत्तेइ ६५

दर्शनचरणप्रभ्रष्टान् जीवान् दृष्ट्वा धर्मबुद्ध्या ।
हितामितमवगूह्य तान् क्षिप्रं ततः निवर्तयति ॥ ६५॥

दर्शनचरणो१भ्रष्टान् सम्यग्ज्ञानदर्शनचारित्रेभ्यो
भ्रष्टान्निर्गतान् जीवान् दृष्ट्वा धर्मबुद्ध्या हितमितवचनैः सुख-
निमित्तैः पूर्वापरविवेकसहितैर्वचनैरवगूह्य स्वीकृत्य तेभ्यो
दोषेभ्यः क्षिप्रं शीघ्रं तान्निर्वर्तयन् निवर्तयति यः स स्थिरी-
करणं कुर्वन् दर्शनशुद्धो भवतीति सम्बन्धः ॥ ६५ ॥

वात्सल्यार्थं प्रतिपादयन्नाह—

चादुव्वण्णे संघे चदुगदिसंसाराणित्थरणभूदे ।
वच्छल्लं कादव्वं वच्छे गावी जहा गिद्धी ॥ ६६॥

चातुर्वर्णे संघे चतुर्गतिसंसारनिस्तरणभूते ।
वात्सल्यं कर्तव्यं वत्से गोः यथा गृद्धिः ॥ ६६ ॥

---

१ । णियाविज्जो अयमपि पाठः ।

चातुर्वर्ण्ये ऋष्यार्जिकाश्रावकश्राविकासमूहे संघे चतुर्गतिसंसारनिस्तरणभूते नरकतिर्यग्मनुष्यदेवगतिषु यत्संसरणं भ्रमणं तस्य विनाशहेतौ वात्सल्यं कर्तव्यं यथा नवप्रसूता गौर्वत्से स्नेहं करोति । एवं वात्सल्यं कुर्वन् दर्शनविशुद्धो भवति । वात्सल्यं च कायिक-वाचिक-मानसिकानुष्ठानैः सर्वप्रयत्नेनोपकरणौषधाहारावकाशशास्त्रादिदानैः संघे कर्तव्यमिति ॥ ६६ ॥

प्रभावनास्वरूपप्रतिपादनार्थमाह—

**धम्मकहाकहणेण य बाहिरजोगेहिं चावि णवज्जेहिं**
**धम्मो पहाविदव्वो जीवेसु दयाणुकंपाए ॥ ६७**

धर्मकथाकथनेन च बाह्ययोगैश्चापि अनवद्यैः ।
धर्मः प्रभावयितव्यः जीवेषु दयानुकंपया ॥ ६७॥

धर्मकथाकथनेन त्रिषष्टिशलाकापुरुषचरिताख्यानेन सिद्धान्ततर्कव्याकरणादिव्याख्यानेन धर्मपापादिस्वरूपकथनेन वा बाह्ययोगैश्चापि अभ्रावकाशातापनवृक्षमूलानशनादिभिरनवद्यैर्हिंसादिदोषरहितैर्धर्मः प्रभावयितव्यो मार्गस्योद्योतः कर्तव्यो जीवदयानुकम्पायुक्तेन, अथवा जीवदयानुकम्पया च धर्मः प्रभावयितव्यः, तथापिशब्दसूचितैः परवादिजयाष्टांगनिमित्तदानपूजादिभिश्च धर्मः प्रभावयितव्य इति ॥

अधिगमस्वरूपं प्रतिपाद्य नैसर्गिकसम्यक्त्वस्वरूपप्रतिपादनायाह—

जं खलु जिणोवदिट्ठं तमेव तात्थित्ति भावदो गहणं
सम्मदंसणभावो तव्विवरीदं च मिच्छत्तं ॥ ६८ ॥

*यत् खलु जिनोपदिष्टं तदेव तथ्यमिति भावतो ग्रहणं*
सम्यग्दर्शनभावः तद्विपरीतं च मिथ्यात्वं ॥ ६८ ॥

यत्तत्त्वं जिनैरुपदिष्टं प्रतिपादितं तदेव तथ्यं सत्यं खलु व्यक्तमित्येवं भावतः परमार्थेन ग्रहणं यत्सम्यग्दर्शनभाव आज्ञासम्यक्त्वमिति यावत् । तद्विपरीतं मिथ्यात्वमसत्यरूपेण जिनोपदिष्टस्य तत्त्वस्य ग्रहणं मिथ्यात्वं भवतीति ॥ ६८ ॥

दर्शनाचारसमर्पणाय ज्ञानाचारसूचनायोत्तरगाथा—

दंसणचरणो एसो णाणाचारं च वोच्छमट्ठविहं ।
अट्ठविहकम्ममुक्को जेण य जीवो लहइ सिद्धिं ।

दर्शनचरण एष ज्ञानाचारं च वक्ष्ये अष्टविधं ।
अष्टविधकर्ममुक्तः येन च जीवः लभते सिद्धिम् ६९

*दर्शनाचार एष मया वर्णितः समासेनेत ऊर्ध्वं ज्ञानाचारं* वक्ष्ये कथयिष्याम्यष्टविधं येन ज्ञानाचारेणाष्टविधकर्ममुक्तो जीवो लभते सिद्धिं, ज्ञानभावनया कर्मक्षयपूर्विका सिद्धिरिति भावार्थः ॥ ६९ ॥

किं ज्ञानं यस्याचारः कथ्यते इति चेदित्याह—

जेण तच्चं विबुज्झेज्ज जेण चित्तं णिरुज्झदि ।
जेण अत्ता विसुज्झेज्ज तं णाणं जिणसासणे ७०

येन तत्त्वं विबुध्यते येन चित्तं निरुध्यते।
येन आत्मा विशुध्यते तत् ज्ञानं जिनशासने ॥७०

येन तत्त्वं वस्तुयाथात्म्यं विबुध्यते परिच्छिद्यते येन च चित्तं मनोव्यापारो निरुद्ध्यते आत्मवशं क्रियते येन चात्मा जीवो विशुद्ध्यते वीतरागः क्रियते परिच्छिद्यते तज्ज्ञानं जिनशासने प्रमाणं मोक्षमापणाभ्युपायं संशयविपर्ययानध्यवसायाकिञ्चित्करविपरीतं प्रत्यक्षं परोक्षं च। तत्र प्रत्यक्षं द्विप्रकारं मुख्यममुख्यं च, मुख्यं द्विविधं देशमुख्यं परमार्थमुख्यं, देशमुख्यमवधिज्ञानं मनःपर्ययज्ञानं च, परमार्थमुख्यं केवलज्ञानं, सर्वद्रव्यपर्यायपरिच्छेदात्मकं। अमुख्यं प्रत्यक्षेन्द्रियविषयसन्निपातानन्तरसमुद्भूतसविकल्पकमीषत्प्रत्यक्षभूतं। परोक्षं श्रुतानुमानार्थापत्तितर्कोपमानादिभेदेनानेकप्रकारं, श्रुतं मतिपूर्वकं इन्द्रियमनोविषयादन्यार्थविज्ञानं यथाग्निशब्दात् खर्परविज्ञानं। अगपूर्वं वस्तुप्राभृतकादि सर्वं श्रुतज्ञानं। अनुमानं त्रिरूपं त्रिविधलिंगादुत्पन्नं साध्याविनाभाविलिङ्गादुत्पन्नं वा एतच्छ्रुतज्ञानेप्यन्तर्भवति। एकमर्थं जातं दृष्ट्वाविनाभावेनान्यस्यार्थस्य परिच्छित्तिरर्थापत्तिर्यथा शूनपीनागो देवदत्तो दिवा न भुङ्क्ते अर्थादापन्नं रात्रौ भुंक्ते इति। प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं यथा गौस्तथा गवय इति। साध्यसाधनसम्बन्धग्राहकस्तर्कः सर्वमेतत्परोक्षं ज्ञानम् ॥ ७० ॥

सम्यक्त्वसहचरं ज्ञानस्वरूपं व्याख्याय चारित्रसहचर-

स्य ज्ञानस्य स्वरूपं प्रतिपादयन्नाह—

**जेण रागा विरज्जेज्ज जेण सेएसु रज्जदि ।**
**जेण मित्तीं पभावेज्ज तं णाणं जिणसासणे ॥ ७१**

येन रागात् विरज्यते येन श्रेयसि रज्यते ।
येन मैत्रीं प्रभावयेत् तत् ज्ञानं जिनशासने ॥ ७१ ॥

येन रागात् स्नेहात् कामक्रोधादिरूपाद्विरज्यते पराङ्मुखो भवति जीवः । येन च श्रेयसि रज्यते रक्तो भवति । येन मैत्रीं द्वेषाभावं प्रभावयेत् तज्ज्ञानं जिनशासने । किमुक्तं भवति-अतत्त्वे तत्त्वबुद्धिरदेवे देवताभिप्रायो नागमे आगमबुद्धिरचारित्रे चारित्रबुद्धिरनेकान्ते एकान्तबुद्धिरित्यज्ञानम् ॥ ७१ ॥

ज्ञानाचारस्य कति भेदा इति पृष्टेऽत आह—

**काले विणए उवहाणे बहुमाणे तहेव णिण्हवणे ।**
**वंजण अत्थ तदुभए णाणाचारो दु अट्ठविहो ॥**

काले विनये उपधाने बहुमाने तथैवानिह्नवने ।
व्यंजनमर्थस्तदुभयं ज्ञानाचारस्तु अष्टविधः ॥७२॥

काले-स्वाध्यायवेलायां पठनपरिवर्तनव्याख्यानादिकं क्रियते सम्यक् शास्त्रस्य यत्स कालोऽपि ज्ञानाचार इत्युच्यते, साहचर्यात्कारणे कार्योपचाराद्वा । विणए-कायिकवाचिक-

मानसशुद्धपरिणामैः स्थितस्य तेन वा योऽयं श्रुतस्य पाठो व्याख्यानं परिवर्तनं यत्स विनयाचारः। (उवहाणे-) उपधानं अवग्रहविशेषेण पठनादिकं साहचर्यात् उपधानाचारे (र.)। बहुमानं पूजासत्कारादिकेन पाठादिकं बहुमानाचारः। तथैवानिन्हवनं यस्मात्पठितं श्रुतं स एव प्रकाशनीयः यद्वा पठित्वा श्रुत्वा ज्ञानी सञ्जातस्तदेव श्रुतं ख्यापनीयमिति अनिन्हवाचारः, व्यञ्जनं वर्णपदवाक्यशुद्धिः, व्याकरणोपदेशेन वा तथा पाठादिर्व्यञ्जनाचारः। अत्थ-अर्थोऽभिधेयोऽनेकान्तात्मकस्तेन सह पाठादि अर्थाचारः। शब्दार्थशुद्धया पाठादि तदुभयाचारः। सर्वत्र साहचर्यात् कार्ये कारणाद्युपचाराद्वाऽभेदः। कालादिशुद्धिभेदेन वा ज्ञानाचारोऽष्टविध एव, अधिकरणभेदेन वाधारस्य भेदः। प्रथमा विभक्तिः सप्तमी वा दृष्टव्या॥ ७२॥

कालाचारमपंचमतिपादनार्थमाह—

पादोसियवेरत्तियगोसग्गियकालमेव गेण्हित्ता।
उभये कालह्मि पुणो सज्झाओ होदि कायव्वो॥७३

प्रादोपिकवैरात्रिकगौसर्गिककालमेव गृहीत्वा।
उभययोः कालयोः पुनः स्वाध्यायः भवति कर्तव्यः॥

प्रकृष्टा दोषा रात्रिर्यस्मिन् काले स प्रदोषः कालः रात्रेः पूर्वभाग इत्यर्थः। तत्सामीप्याद्दिनपश्चिमभागोऽपि प्रदोप इ-

त्युच्यते ततः प्रदोषग्रहणेन द्वौ कालौ गृह्येते। प्रदोष एव प्रादोषिकः। विगता रात्रिर्यस्मिन् काले स विरात्री रात्रेः पश्चिमभागः, द्विघटिकासहितार्धरात्रादूर्ध्वकालः, विरात्रिरेव वैरात्रिकः। गवां पशूनां सर्गो निर्गमो यस्मिन् काले स कालो गोसर्गः। गोसर्ग एव गौसर्गिको द्विघटिकोदयादूर्ध्वकालो द्विघटिकासहितः मध्याह्नात्पूर्वः। एतत्कालचतुष्टयं गृहीत्वोभयकाले दिवसस्य पूर्वाह्णकालेऽपराह्णकाले च तथा रात्रेः पूर्वकालेऽपरकाले च पुनः अभीक्ष्णं स्वाध्यायो भवति कर्तव्यः पठनपरिवर्तनव्याख्यानादीनि कर्तव्यानि भवन्तीति ॥ ७३ ॥

स्वाध्यायस्य ग्रहणकालं परिसमाप्तिकालं च प्रतिपादयन्नाह—

**सज्झाये पट्ठवणे जंघच्छायं वियाण सत्तपयं।**
**पुव्वण्हे अवरण्हे तावदियं चेव णिट्ठवणे ॥७४॥**

स्वाध्याये प्रस्थापने जंघच्छायां विजानीहि सप्तपदां पूर्वाह्णे अपराह्णे तावत्कं चैव निष्ठापने ॥ ७४ ॥

स्वाध्यायस्य परमागमव्याख्यानादिकस्य प्रस्थापने प्रारम्भे, जंघयोश्छाया जंघच्छाया तां जंघच्छाया विजानीहि सप्तपदां सप्तवितस्तिमात्रां पूर्वाह्णेऽपराह्णे च तावन्मात्रां स्वाध्याय समाप्तिकाले च्छायां विजानीहि। सवितुरुदये यदा जंघाच्छाया सप्तवितस्तिमात्रा भवति तदा स्वाध्यायो ग्राह्यः। अपरा-

ग्रहे च सवितुरस्तमनकाले यदा जघाच्छाया सप्तवितस्तिमात्रा तिष्ठति तदा स्वाध्याय उपसंहरणीय इति ॥ ७४ ॥

पूर्वाग्हे स्वाध्यायस्य परिसमाप्तिः कस्या वेलाया क्रियत इति पृष्टेऽत आह—

आसाढे दुपदा छाया पुस्समासे चदुप्पदा।
वड्ढदे हीयदे चावि मासे मासे दुअंगुला ॥७५
आषाढे द्विपदा छाया पुष्यमासे चतुष्पदा।
वर्धते हीयते चापि मासे मासे द्व्यगुला ॥ ७५ ॥

जघाच्छाया इत्यनुवर्तते। मिथुनराशौ यदा तिष्ठत्यादित्यः स य ए आषाढमास इत्युच्यते। मासर्त्रिशद्रात्रः समुदाये वर्तमानाऽप्यत्र मासावसाने दिवसे वर्तमानो गृह्यते समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति न्यायात्। एव पुष्यमासेऽपि निरूपयितव्यः। आषाढमासे यदा द्विपदा जंघाच्छाया पूर्वाग्हे तदा स्वाध्याय उपसहर्त्तव्यः। अत्र षडगुलः पादः परिगृह्यते। तथा पुष्यमासे मध्यान्होदये यदा चतुष्पदा जघ च्छाया भवति तदा स्वाध्यायो निष्ठापयितव्यः। आषाढमासान्तदिवसादारभ्य मासे मासे द्वे द्वे अङ्गुले तावद्वृद्धिमागच्छते यावत्पुष्यमासे चतुष्पदाच्छाया सञ्जाता। पुनस्तस्मादारभ्य द्वे द्वे अगुले मासे मासे हानिमुपनेतव्ये यावदाषाढे मासे द्विपदाच्छाया सजाता। कर्कटसक्रान्तेः प्रथम-

दिवसमारभ्य यावद्धनुःसंक्रान्तेरन्त्यदिनं तावद्दिनं प्रति दिनं प्रति अङ्गुलस्य पञ्चदशभागो वृद्धिं गच्छति ततो हानिम् । अत्र त्रैराशिकक्रमेण हानिवृद्धी साधितव्ये । अपराह्णे स्वाध्याय-समारम्भकालस्य रात्रौ स्वाध्यायकालस्य च काल्परिमाणं न ज्ञातं तज्ज्ञात्वा वक्तव्यम् । मध्यान्हादुपरिघटिकाद्वये स्वाध्यायो ग्राह्यः, तथा रात्रौ प्रथमघटिकाद्वये सर्वासु संध्यादा-वन्ते च घटिकाद्वये वर्जयित्वा स्वाध्यायो ग्राह्यो ज्ञातव्य-श्चेति ॥ ७५ ॥

दिग्विभागशुद्ध्यर्थमाह—

**णवसत्तपंचगाहापरिमाणं दिसिविभागसोधीए ।**
**पुव्वण्हे अवरण्हे पदोसकाले य सज्झाए ॥ ७६ ॥**

नवसप्तपंचगाथापरिमाणं दिशाविभागशुद्ध्यै ।
पूर्वाह्णे अपराह्णे प्रदोषकाले च स्वाध्याये ॥ ७६ ॥

दिशा विभागो दिग्विभागस्तस्य शुद्धिरुल्कापातादिर-हितत्वं दिग्विभागशुद्धेर्निमित्तं कायोत्सर्गमास्थाय प्रतिदिशं पूर्वाह्णकाले स्वाध्यायविषये नव नव गाथापरिमाणं जाप्यं । तत्र यदि दिग्दाहादीनि भवन्ति तदा कालशुद्धिर्न भवती-ति वाचनाभङ्गो भवति । एषा कालशुद्धी रात्रिपश्चिमायाम-स्वाध्याये कर्तव्या । एवमपराह्णे स्वाध्यायनिमित्तं कायोत्सर्ग-मास्थाय प्रतिदिशं सप्तसप्तगाथापरिमाणं पाठ्यम् । प्रदोष-

गहस्वाध्याये तथा प्रदोषवाचनानिमित्तं पच पचगाथाप्रमाणं प्रतिदिश घोष्यमिति । सर्वत्र दिशादाहाद्यभावे कालशुद्धिरिति ॥ ७६ ॥

अथ के ते दिग्दाहादय इति पृष्टे तानाह—

**दिसदाह उक्कपडणं विज्जु चडुक्कासणिंदधणुगं च**
**दुग्गंधसज्झदुद्दिणचंदग्गहसूरराहुजुज्झं च ७७**

दिग्दाहः उल्कापतनं विद्युत् चडत्काराशनींद्रधनुश्च
दुर्गंधसंध्यादुर्दिनचन्द्रग्रहसूरराहुयुद्धं च ॥ ७७ ॥

*दिशा दाह उत्पातेन दिशोऽग्निवर्णाः ।* उल्कायाः पतन गगनात् तारकाकारेण पुद्गलपिण्डस्य पतनं । विद्युचैवयचिक्यं, चडत्कारः वज्र मेघसघट्टोद्भवं । अशनिः करक निचयः । इन्द्रधनुः धनुषाकारेण पंचवर्णपुद्गलनिचयः । दुर्गन्धः पूतिगन्धः । सन्ध्या लोहितपीतवर्णाकार । दुर्दिन' पतदुदकाभ्रसयुक्तो दिवसः । चन्द्रयुद्ध, ग्रहयुद्धं, सूरयुद्ध राहुयुद्धं च । चन्द्रस्य ग्रहेण भेद सघट्टो वा, ग्रहस्यान्योन्यग्रहेण भेदाः सघट्टादिर्वा, सूर्यस्य ग्रहेण भेदादिः, राहोश्चन्द्रेण सूर्येण वा संयोगो ग्रहणमिति । चशब्देन निर्घातादयो गृह्यन्त इति ॥ ७७ ॥

**कलहादिधूमकेदू धरणीकंपं च अब्भगज्जं च ।**
**इच्चेवमाइबहुया सज्झाए वज्जिदा दोसा ॥ ७८ ॥**

कलहादिधूम्रकेतुः धरणीकंपश्च अभ्रगर्जं च ।
इत्येवमादिबहुका स्वाध्याये वर्जिता दोषाः ॥ ७८ ॥

कलहः क्रोधाद्याविष्टानां वचनप्रतिवचनैर्जल्पः महोपद्रवरूपः । आदिशब्देन खड्ग कृपाणी-लकुटादिभिर्युद्धानि परगृह्यन्ते । धूमकेतुर्गगने धूमाकाररेखाया दर्शनं । धरणीकम्पः पर्वतप्रासादादिसमन्विताया भूमेश्चलनं । चकारेण शोणितादिवर्षस्य ग्रहणं । अभ्रगर्जनं मेघध्वनिः । चकारेण महावाताग्निदाहादयः परिगृह्यन्ते । इत्येवमाद्यन्येऽपि बहवः स्वाध्यायकाले वर्जिताः परिहरणीया दोषाः सर्वलोकानामुपद्रवहेतुत्वात् । एते कालशुद्धयां क्रियमाणायां दोषाः पठनोपाध्यायसंघराष्ट्रराजादिविप्रकारिणो यत्नेन त्याज्या इति ॥७८॥

कालशुद्धिं विधाय द्रव्यक्षेत्रभावशुद्ध्यर्थमाह—

रुहिरादिपूयमंसं दव्वे खेत्ते सदहत्थपरिमाणं ।
कोधादिसंकिलेसा भावविसोही पढणकाले ७९

रुधिरादि पूतिमांसं द्रव्ये क्षेत्रे शतहस्तपरिमाणं ।
क्रोधादिसंक्लेशो भावविशुद्धिः पठनकाले ॥ ७९ ॥

रुधिरं रक्तं । आदिशब्देनाशुचिशुक्रास्थिव्रणादीनि परिगृह्यन्ते, पूयं-कुथितक्लेदः । मांसं आर्द्रं पंचेन्द्रियावयवं । द्रव्ये आत्मशरीरेऽन्यशरीरे ( च ) वैतानि वर्जनीयानि । क्षेत्रे

स्वाध्यायकरणप्रदेशे चतसृषु दिक्षु हस्तशतचतुष्मात्रेण सर्वाणि वर्जनीयानि। यदि शोधयितुं न शक्यन्ते तत्क्षेत्रं द्रव्यं च त्याज्यं तस्मिन् सजीवे सति स्वाध्यायो न कर्तव्यः। भवचक्षुश्रोत्रादिभिरष्णोदकादीनि ग्राह्याणि, घृतप्रचुरहेत्वाहारादिनं ग्राह्यः, जीर्णादयोऽपि न कर्तव्याः। द्रव्यशुद्धिं क्षेत्रशुद्धिं चेच्छुभिः क्रोधादयोऽपि संक्लेशा वर्जनीयाः। क्रोधमानमायालोभासूयेर्ष्यादीनामभावो भावशुद्धिः पठनकाले कर्तव्या अत्यर्थमुपसमादयो भावयितव्याः। कालशुद्ध्यादिभिः शास्त्रं पठितं कर्मक्षयाय भवत्यन्यथा कर्मबन्धायेति ॥ ७९ ॥

कालशुद्ध्या यद्यत्सूत्रं पठ्यते तत्तत्केनोक्तमत आह—

**सुत्तं गणधरकधिदं तहेव पत्तेयबुद्धिकथिदं च ।**
**सुदकेवलिणा कधिदं अभिण्णदसपुव्वकधिदं च**

सूत्रं गणधरकथितं तथैव प्रत्येकबुद्धिकथितं च ।
श्रुतकेवलिना कथितं आभिन्नदशपूर्वकथितं च ८०

सूत्रं अंगपूर्ववस्तुप्राभृतादि गणधरदेवैः कथितं सर्वज्ञमुखकमलादर्थं गृहीत्वा ग्रन्थस्वरूपेण रचितं गौतमादिभिः। तथैवैकं कारणं प्रत्याश्रित्य बुद्धाः प्रत्येकबुद्धाः: धर्मश्रवणाद्युपदेशमन्तरेण चारित्रावरणादिक्षयोपशमात्, ग्रहणोल्कापातादिदर्शनात् संसारस्वरूपं विदित्वा गृहीतसंयमाः प्रत्येकबुद्धास्तैः कथितं। श्रुतकेवलिना कथितं रचितं द्वादशांगचतु-

दशपूर्वधरेणोपदिष्टं । अभिन्नानि रागादिभिरपरिणतानि दश-पूर्वाणि उत्पादपूर्वादीनि येषां तेऽभिन्नदशपूर्वास्तैः कथितं प्रतिपादितमभिन्नदशपूर्वकथितं च सूत्रमिति सम्बन्धः ॥८०॥

तत्सूत्र किम् ?

तं पाढिदुमसज्झाये–
णो कप्पदि विरद इत्थिवग्गस्स ।
एत्तो अण्णो गंथो–
कप्पदि पाढिदुं असज्झाए ॥८१॥

तत् पठितुमस्वाध्याये नो कल्प्यते विरते स्त्रीवर्गस्य ।
इतः अन्यः ग्रंथ कल्प्यते पठितुं अस्वाध्याये ॥ ८१॥

तत्सूत्रं पठितुमस्वाध्याये न कल्प्यते न युज्यते विरतवर्गस्य संयतसमूहस्य स्त्रीवर्गस्य चार्यिकावर्गस्य च । इतोऽस्मादन्यो ग्रन्थः कल्प्यते पठितुमस्वाध्यायेऽन्यत्पुनः सूत्रं कालशुद्ध्याद्यभावेऽपि युक्तं पठितुमिति ॥ ८१ ॥

किं तदन्यत्सूत्रमित्यत आह—

आराहणाणिज्जुत्ती मरणविभत्ती यं संगहत्थुदिओ
पच्चक्खाणावासयधम्मकहाओ य एरिसओ ८२

आराधनानिर्युक्तिः मरणविभक्तिश्च संग्रहःस्तुतयः ।
प्रत्याख्यानावश्यकधर्मकथाश्च ईदृशः ॥ ८२ ॥

आराधना सम्यग्दर्शनज्ञानचारित्रतपसामुद्योतनोद्यवन-निर्वाहणसाधनादीनि तस्या निर्युक्तिराराधनानिर्युक्तिः। मरणविभक्तिः सप्तदशमरणप्रतिपादकग्रन्थरचना। संग्रहः पंचसंग्रहादयः। स्तुतयः देवागमपरमेष्ठ्यादयः। प्रत्याख्यान त्रिविधचतुर्विधाहारपरित्यागप्रतिपादनो ग्रन्थः सावद्यद्रव्य क्षेत्रादिपरिहारप्रतिपादनो वा। आवश्यकाः सामायिक चतुर्विंशतिस्तववन्दनादिस्वरूपप्रतिपादको ग्रन्थः। धर्मक-थास्त्रिषष्टिशलाकापुरुषचरितानि द्वादशानुप्रेक्षादयश्च। ईदृग्भू-तोऽन्योऽपि ग्रन्थः पठितुमस्वाध्यायेऽपि च युक्तः॥ ८२॥

कालशुद्ध्यनन्तरं कस्मिन् ग्रन्थे कस्मिंश्चावसरे काः क्रियाः कर्तव्या इति पृष्टेऽत आह—

**उद्देस समुद्देसे अणुणापणए अ होंति पंचेव।**
**अंगसुदखंधझेणुवदेसा विय पदविभागी य॥**

उद्देशे समुद्देशे अनुज्ञापणायां च भवंति पंचेव।
अंगश्रुतस्कंधप्राभृतप्रदेशा अपि पदविभागी च॥८३

उद्देशे प्रारम्भकाले, समुद्देशे शास्त्रसमाप्तौ, अनुज्ञापणाया गुरोरनुज्ञाया भवन्ति पंचैव। नात्र केचन निर्दिष्टास्तथाप्युप देशादुपवासाः कायोत्सर्गा वा ग्राह्याः। अथवा अनुज्ञाया एतावत्पंच पणका व्यवहाराः प्रायश्चित्तानि पंचैव भवन्ति ते चोपवासाः कायोत्सर्गा वा। अंगं द्वादशाङ्गानि। श्रुत

चतुर्दशपूर्वाणि । स्कन्धः वस्तूनि । अंशुव-प्राभृतं । देशश्च प्राभृतप्राभृत । पदविभागादेकैकश । अंगस्याध्ययनप्रारम्भे समाप्तौ शुद्धिमिच्छिष्यानुज्ञायामुपवासाः कायोत्सर्गा वा पंच कर्तव्या भवन्ति । एवं पूर्वाणां, वस्तूना, प्राभृतानां, प्राभृत-प्राभृतानां प्रारम्भे समाप्तौ अनुज्ञायामेकैकशः पंच पंचोपवासाः कायोत्सर्गा वा कर्तव्या भवन्तीति ॥ ८३ ॥

पदविभागतः पृथक्पृथक्कालशुद्धिं व्याख्याय विनयशुद्धयर्थमाह—

पलियंकणिसेज्जगदो
पडिलेहिय अंजलीकदपणामो ।
सुत्तत्थजोगजुत्तो
पढिदव्वो आदसत्तीए ॥ ८४ ॥

पर्यंकनिषद्यागतः प्रतिलेख्य अंजलिकृतप्रणामः ।
सूत्रार्थयोगयुक्तः पठितव्यः आत्मशक्त्या ॥ ८४ ॥

पर्यङ्केण निशद्या गत उपविष्टः पर्यंकनिशद्यागतः पर्यंकेन वीरासनादिभिर्वा सम्यग्विधानेनोपविष्टस्तेन, प्रतिलिख्य चक्षुषा पिच्छिकया शुद्धजलेन च पुस्तकं भूमिहस्तपादादिकं च सम्मार्ज्य । अञ्जलिना कृतः प्रणामो येनासावञ्जलिकृतप्रणामस्तेन करमुकुलाङ्कितचक्षुषा सूत्रार्थसंयोगः

सम्पर्कस्तेन युक्तः समन्वितः सूत्रार्थयोगयुक्तोऽङ्गादिग्रन्थः पठितव्योऽध्येतव्यः । आत्मशक्त्या सूत्रार्थाव्यभिचारेण शुद्धोपयोगेन शक्तिमनवगुह्य यत्नेन जिनोक्तं सूत्रमर्थयुक्तं पठनीयमिति ।

उपधानशुद्धचर्थमाह—

आयंबिल णिव्वियडी
अण्णं वा होदि जस्स कादव्वं ।
तं तस्स करेमाणो
उपहाणजुदो हवदि एसो ॥८५॥

आचाम्लं निर्विकृतिः अन्यत् वा भवति यस्य कर्तव्यं ।
तत् तस्य कुर्वाणः उपधानयुतो भवति एषः ॥ ८५ ॥

आचाम्लं सौवीरौदनादिकं, विकृतेर्निर्गतं निर्विकृत घृतदध्यादिविरहितौदनः, अन्यद्वापकान्नादिकं यस्य शास्त्रस्य कर्तव्यमुपधान सम्यक्सन्मानं तदुपधानं कुर्वाणस्तस्य शास्त्रस्योपधानयुक्तो भवत्येषः । साधुनावग्रहादिकं कृत्वा शास्त्रं सर्वं श्रोतव्यमिति तात्पर्यं पूजादरश्च कृतो भवति ॥ ८५ ॥

बहुमानस्वरूपं प्रतिपादयन्नाह—

सुत्तत्थं जप्पंतो वायंतो चावि णिज्जराहेदुं ।

आसादणं ण कुज्जा तेण किदं होदि बहुमाणं ॥

सूत्रार्थं जल्पयन् वाचयंश्चापि निर्जराहेतोः ।

आसादनां न कुर्यात् तेन कृतं भवति बहुमानं ॥ ८६॥

अङ्गश्रुतादीनां सूत्रार्थं यथास्थितं तथैव जल्पन्नुच्चरन् पाठयन् वाचयंश्चापि प्रतिपादयंश्चाप्यन्यस्य निर्जराहेतोः कर्मक्षयनिमित्तं च आचार्यादीनां शास्त्रादीनामन्येषामपि आसादनं परिभवं न कुर्याद्‌गर्विनो न भवेत्तेन शास्त्रादीनां बहुमानं पूजादिकं कृतं भवति । शास्त्रस्य गुरोरन्यस्य वा परिभवो न कर्तव्यः पूजावाचनादिकं च कर्तव्यमिति तात्पर्यार्थः ॥ ८६ ॥

अनिन्हवस्वरूपं प्रतिपादयन्नाह—

कुलवयसीलविहूणे
सुत्तत्थं सम्मगागमित्ताणं ।
कुलवयसीलमहल्ले
णिण्हवदोसो दु जप्पंतो ॥ ८६ ॥

कुलव्रतशीलविहीनाः सूत्रार्थं सम्यगवगम्य ।

कुलव्रतशीलमहतो निह्नवदोषस्तु जल्पंतः ॥८७॥

कुलं गुरुसन्ततिः, व्रतानि हिंसादिविरतयः, शीलं व्रतपरिरक्षणाद्यनुष्ठानं तैर्विहीना म्लानाः कुलव्रतशीलविहीनाः ।

मठादिपालनेनाज्ञानादिना वा गुरुः सदोषस्तस्य शिष्यो ज्ञानी तपस्वी च कुलहीन इत्युच्यते। अथवा तीर्थंकरगणधरसप्तर्धिसं प्राप्तेभ्योऽन्ये यतयः कुलव्रतशीलविहीनास्तेभ्यः कुलव्रतशील-विहीनेभ्यः सम्यक्शास्त्रमवगम्य ज्ञात्वा कुलव्रतशीलैर्ये महान्तस्तान् यदि कथयति तेभ्यो मया शास्त्रं ज्ञातमित्येवं तस्य जल्पतो निन्हवदोषो भवति। आत्मनो गर्वमुद्वहता शास्त्रनिन्हवो गुरुनिन्हवश्च कृतो भवति। ततश्च महान् कर्मबन्धः। जैनेन्द्रं च शास्त्रं पठित्वा श्रुत्वा पश्चाज्जल्पति न मया तत्प ठितं, न तेनाहं ज्ञानीति किन्तु नैयायिक वैशेषिक सांख्य-मीमांसा धर्मकीर्त्यादिभ्यो मम बोधः संजात इति निर्ग्रन्थ यतिभ्यः शास्त्रमवगम्यान्यत्प्रतिपादयति ब्राह्मणादीन्, कस्माल्लोकपूजाहेतोर्यदा मिथ्यादृष्टिरसौ तदाप्रभृति मन्तव्यः निन्हवदोषेणेति। सामान्ययतिभ्यो ग्रन्थं श्रुत्वा तीर्थंकरादीन् प्रति पादयत्येवमपि निन्हवदोष इति॥ ८७॥

व्यञ्जनार्थोभयशुद्धिस्वरूपार्थमाह—

**विंजणसुद्धं सुत्तं अत्थविसुद्धं च तदुभयविसुद्धं।**
**पयदेण य जप्पंतो णाणविसुद्धो हवइ एसो॥**

व्यंजनशुद्धं सूत्रं अर्थविशुद्धं च तदुभयविशुद्धं।
प्रयत्नेन च जल्पन् ज्ञानविशुद्धो भवति एषः॥ ८८॥

व्यञ्जनशुद्धं, अक्षरशुद्धं पदवाक्यशुद्धं च दृष्ट्वा देशा

मर्थकत्वात्सूत्राणां । अर्थविशुद्धं-अर्थसहितं । तदुभयविशुद्धं च व्यञ्जनार्थसहितं सूत्रमिति सम्बन्धः । प्रयत्नेन च व्याकरणद्वारेणोपदेशेन वा जल्पन् पठन् प्रतिपादयन् वा ज्ञानविशुद्धो भवत्येषः । सिद्धांतादीनक्षरविशुद्धानर्थशुद्धान् ग्रंथार्थशुद्धांश्च पठन् वाचयन् प्रतिपादयंश्च ज्ञानविशुद्धो भवत्येषः । अक्षरादिव्यत्ययं न करोति यथाव्याकरणं यथोपदेशं पठतीति ॥ ८८ ॥

किमर्थं विनयः क्रियत इत्याह—

विणएण सुदमधीदं
जदिवि पमादेण होदि विस्सरिदं।
तमुवट्ठादि परभवे
केवलणाणं च आवहदि ॥ ८९ ॥

विनयेन श्रुतमधीतं यद्यपि प्रमादेन भवति विस्मृतं ।
तदुपतिष्ठते परभवे केवलज्ञानं च आवहति ॥ ८९ ॥

विनयेन श्रुतमधीतं यद्यपि प्रमादेन विस्मृतं भवति तथापि परभवेऽन्यजन्मनि तत्सूत्रमुपतिष्ठते, केवलज्ञानं चावहति प्रापयति तस्मात्कालादिशुद्ध्या पठितव्यं शास्त्रमिति ॥

ज्ञानाचारमुपसंहरश्चारित्राचारमग्रन्थं सूचयन्नाह—

णाणाचारो एसो णाणगुणसमण्णिदो मए वुत्तो ।

**एत्तो चरणाचारं चरणगुणसमण्गिदं वोच्छं ॥**

ज्ञानाचारः एषः ज्ञानगुणसमान्वितो मया उक्तः ।
इतः चरणाचारं चरणगुणसमन्वितं वक्ष्ये ॥ ९० ॥

ज्ञानाचारो ज्ञानगुणसमन्वितो मयोक्तः । इत उर्ध्वं चरणाचारं चरणगुणसमन्वितं वक्ष्ये कथयिष्येऽनुवदिष्यामीति। तेनाग्रात्मव पूर्वं परिहृतमाप्तकर्तृत्वं च ख्यापितं ॥९०॥

तथा प्रतिज्ञानिर्वहन्नाह—

**पाणिवहमुसावादअदत्तमेहुणपरिग्गहा विरदी ।
एस चरित्ताचारो पंचविहो होदि णादव्वो ॥**

प्राणिवधमृषावादादत्तमैथुनपरिग्रहाणां विरतयः ।
एष चारित्राचारः पंचविधो भवति ज्ञातव्यः ॥९१॥

प्राणिवधमृषावादादत्तमैथुनपरिग्रहाणा विरतयो निवृत्तय एष चारित्राचारः पंचप्रकारो भवति ज्ञातव्यः । येन प्राण्युपघातो जायते तत्सर्वं मनसा वचसा कायेन च परिहर्तव्यं येनानृतं, येन च स्तैन्य, येन मैथुनेच्छा, येन च परिग्रहेच्छा तत्सर्वं त्याज्यमिति ॥ ९१ ॥

प्रथमव्रतप्रपंचनार्थमाह—

**एइंदियादिपाणा पंचविधावज्जभीरुणा सम्मं ।
ते खलु ण हिंसिदव्वा मणवचिकायेण सव्वत्थ ॥**

एकेंद्रियादिप्राणाः पंचविधावद्यभीरुणा सम्यक् ।
ते खलु न हिंसितव्याः मनोवाक्कायैः सर्वत्र ॥ ९२ ॥

एकमिन्द्रियं येषां ते एकेन्द्रियाः, एकेन्द्रिया आदयो येषां प्राणानां जीवानां त एकेन्द्रियादयः प्राणाः, ते कियन्तः पंचविधाः पंचप्रकाराः ते, खलु स्फुट अवद्यभीरुणा सम्यग्विधानेन न हिंसितव्याः, मनसा वचसा कायेन च सर्वत्र पीडा न कर्तव्या न कारयितव्या नानुमन्तव्येति । सर्वस्मिन् काले, सर्वस्मिन् देशे सर्वस्मिन्वा भावे चेति ॥ ९२ ॥

द्वितीयव्रतस्वरूपनिरूपणार्थमाह—

हस्सभयकोहलोहा मणिवचिकायेण सव्वकालम्मि
मोसं ण य भासिज्जो पच्चयघादी हवदि एसो ॥
हास्यभयक्रोधलोभैः मनोवाक्कायैः सर्वकाले ।
मृषां न च भाषयेत् प्रत्ययघाती भवति एषः ॥ ९३ ॥

हास्यभयलोभक्रोधैर्मनोवाक्कायप्रयोगेण सर्वस्मिन् कालेऽतीतानागतवर्तमानकालेषु मृषावादं-परपीडाकरं वचनं नो वदेत् । यत एष मृषावादः प्रत्ययघाती भवतीति न कस्यापि विश्वासस्थानं जायते । अतो हास्यात्, क्रोधात्, भयाल्लोभाद्वा परपीडाकरं वस्तुयाथात्म्यविपरीतप्रतिपादकं वचनं मनसा न चिन्तयेत्, ताल्वादिव्यापारेण नोच्चारयेत्, कायेन नानुष्ठापयेदिति ॥ ९३ ॥

अस्तेयव्रतस्वरूपनिरूपणायाह—

गामे णगरे रण्णे थूलं सचित्त बहु सपडिवक्खं।
तिविहेण वज्जिदव्वं अदिण्णगहणं च तण्णिच्चं॥
ग्रामे नगरेऽरण्ये स्थूलं सचित्तं बहु सप्रतिपक्षं।
त्रिविधेन वर्जितव्यं अदत्तग्रहणं च तन्नित्यं॥ ९४॥

ग्रामो वृत्त्यावृतः। नगरं चतुर्गोपुरोद्भासि शालं। अरण्यं महाटवीगहनं। उपलक्षणमात्रमेतत्। तेन ग्रामे, नगरे, पत्तने, अरण्ये, पथि, खले, मटवे, खेटे, कर्वटे, संवाहने, द्रोणमुखे, सागरे, द्वीपे, पर्वते, नद्यां वेत्येवमाद्यन्येष्वपि प्रदेशेषु स्थूलं सूक्ष्मं, सचित्तमचित्तं, बहु स्तोकं वा सप्रतिपक्षं द्रव्यं सुवर्णादिकं धनधान्यं वा द्विपदचतुष्पादजातं वा कांस्यवस्त्राभरणादिक वा पुस्तिकाकपलिकानखरदनपिच्छिकादिकं वा, नष्टं वा विस्मृतं पतितं स्थापितं परसंगृहीतं त्रिविधेन मनोवाक्कायैः कृतकारितानुमतैर्वादत्तग्रहणं नित्यं तत्सर्वं वर्जितव्यं। अन्यदप्येवमादिधनादिकं विरोधकारणं नेहितव्यं। यतस्तत्सर्वमदत्तं स्तेयस्वरूपमिति॥ ९४॥

चतुर्थव्रतस्वरूपनिरूपणायाह –

अच्चित्तदेवमाणुमतिरिक्खजादं च मेहुणं चदुधा।
तिविहेण तं ण सेवदि णिच्चं पि मुणी हि पयदमणो

अचित्तदेवमानुषतिर्यग्जातं च मैथुनं चतुर्धा ।
त्रिविधेन तत् न सेवते नित्यं अपि मुनिर्हि प्रयतमनाः

अचित्तं; चित्रलेप-पुस्त-भांड-शैल-बंधादिकर्मनिर्वर्तित-स्त्रीरूपाणि, भवनवानव्यन्तरज्योतिष्ककल्पवासदेवस्त्रियः,ब्राह्मणक्षत्रियवैश्यशूद्रस्त्रियश्च, वडवागोमहिष्यादितिरश्चयश्च, एताभ्यो जातमुत्पन्नं चतुर्धा मैथुनं रागोद्रेकात्कामाभिलाषं त्रिविधेन मनोवचनकायकर्मभिः कृतकारितानुमतैस्तन्न सेवते। नित्यमपि मुनिः प्रयत्नमनाः । हि स्फुटं । स्वाध्यायपरो लोकव्यापाररहितः सर्वा स्त्रीप्रतिमाः मातृदुहितृभगिनीवत् चिंतेत् । नैकाकी ताभिः सहैकान्ते तिष्ठेत् । न वर्त्मनि गच्छेत् । न च रहसि मंत्रयेत् । नाप्येकाकी सन्नेकस्याः प्रतिक्रमणादिकं कुर्यात् । येन येन जुगुप्सा भवेत् तत्सर्वं त्याज्यमिति ॥ ९५ ॥

पंचमव्रतप्रपंचनार्थमाह—

गामं णगरं रण्णं थूलं सच्चित्त बहु सपडिवक्खं।
अज्झत्थ बाहिरत्थं तिविहेण परिग्गहं वज्जे ॥
ग्रामं नगरं अरण्यं स्थूल सचित्तं बहु सप्रतिपक्षं ।
अध्यात्मबहिःस्थं त्रिविधेन परिग्रहं वर्जयेत् ॥ ९६ ॥

ग्रामं, नगरं, अरण्यं, पत्तनं, मटंबादिकं च । स्थूलं-क्षेत्रगृहादिकं । सचित्तं दासीदासगोमहिष्यादिकं । बहुमनेकमे-

दभिन्नं । समतिपक्षं सूक्ष्मं चित्रकरूपं नेत्रचीनकौशेयद्रव्यमणिमुक्ताफलसुवर्णभाण्डादिकं । अध्यात्मं मिथ्यात्व-वेद-राग-हास्य-रत्यरति-शोक भय-जुगुप्सा-क्रोध मान-माया-लोभात्मकं बहिःस्थं क्षेत्रवास्त्वादिकं दशप्रकारं । मनोवाक्कायकर्मभिः कृतकारितानुमतैः परिग्रहं श्रामण्यायोग्य वर्जयेत् । सर्वथा मूर्च्छा त्याज्येति नैःसङ्ग्यमाचरेत् ॥ ९६ ॥

अथ महाव्रतनामान्वर्थव्युत्पत्तिं प्रतिपादयन्नाह—

साहंति जं महत्थं आचरिदाणी य जं महल्लेहिं।[1]
जं च महल्लाणि तदो महव्वयाइं भवे ताइं ॥
साधयंति यत् महार्थं आचरितानि च यत् महद्भिः।
यच्च महांति ततः महाव्रतानि भवंति तानि ॥ ९७॥

यस्मान्महार्थं मोक्षं साधयन्ति, यस्माच्च महद्भिस्तीर्थकरादिभिराचरितानि सेवितानि, यतश्च स्वत एव महान्ति सर्वसावद्य-त्यागात् ततस्तानि महाव्रतानि भवन्ति। न पुनः कपालादिग्रहणेनेति ॥ ९७ ॥

अथ रात्रिभोजननिवृत्त्यादिनिरूपणोत्तरप्रबन्धः किमर्थ इति पृष्टेऽत आह—

तेसिं चेव वदाणं रक्खट्ठं रादिभोयणणियत्ती।
अट्ठय पवयणमादा य भावणाओ य सव्वाओ ॥

1 'विरती' इत्यपि पाठः ।

तेषां चैव व्रतानां रक्षार्थं रात्रिभोजननिवृत्तिः।
अष्टौ च प्रवचनमातरश्च भावनाश्च सर्वाः ॥ ९८ ॥

तेषामेव महाव्रतानां रक्षणार्थं रात्रिभोजननिवृत्तिः। रात्रौ भोजनं तस्य निवृत्ती रात्रिभोजननिवृत्तिः। बुभुक्षितोऽपि भोजनकालेऽतिक्रान्ते नैवाहारं चिन्तयति। नाप्युदकादिकं। अष्टौ प्रवचनमातृकाः पंच समितयस्त्रिगुप्तयः। भावनाश्च सर्वाः पंचविंशतयः महाव्रतानां पालनाय वक्ष्यन्त इति ॥ ९८ ॥

यते रात्रौ भोजनक्रियायां प्रविशतो दोषानाह--

तेसिं पंचण्हंपि यन्हयाणमावज्जणं च संका वा।
आदविवत्ती अ हवे रादीभत्तप्पसंगेण ॥
तेषां पंचानामपि चान्हवानामावर्जनं च शंका वा।
आत्मविपत्तिश्च भवेत् रात्रिभक्तप्रसंगेन ॥ ९९ ॥

तेषां पंचानामप्यन्हवानां व्रतानामामन्नाद्यावर्जनं अंगम्लानता, आशङ्का वा लोकस्य किमितिकृत्वायं मत्रजितो रात्रौ प्रविष्टो दुराचारः स्यात्। गृहस्थानामात्मविपत्तिश्च भवेत्। स्थाणुपशुचौरसारमेयनगररक्षकादिभ्यो रात्रिभक्तप्रसंगेन रात्रावाहारार्थं पर्यटतस्तस्माद्रात्रिभोजनं त्याज्यमिति ॥ ९९ ॥

पंचविधमाचारं व्याख्याय समित्यादिद्वारेणाष्टविधं व्याख्यातुकामः प्राह--

**पणिधाणजोगजुत्तो पंचसु समिदीसु तीसु गुत्तीसु**
**एस चरित्ताचारो अट्ठविहो होइ णायव्वो ॥**

प्रणिधानयोगयुक्तः पंचसु समितिषु त्रिषु गुप्तिषु ।
एष चरित्राचारः अष्टविधो भवति ज्ञातव्यः ॥ १००

प्रणिधानं परिणामस्तेन योगः सम्पर्कः प्रणिधानयोगः । युक्तो न्याय्यः शोभनमनोवाक्कायप्रवृत्तयः। पंचसमितिषु त्रिषु गुप्तिषु । एष चारित्राचारोऽष्टविधो भवति ज्ञातव्यः । महाव्रतभेदेन पंचप्रकारः आचारः । अथवा समितिगुप्तिविषयपरिणामभेदेनाष्टप्रकारो न्याय्य आचार इति ॥ १०० ॥

अथ युक्त इति विशेषणं किमर्थमुपात्तमित्याशंकायामाह–

**पणिधाणंपि य दुविहं पसत्थ तह अप्पसत्थं च ।**
**समिदीसु य गुत्तीसु य पसत्थ सेसमप्पसत्थं तु॥१०१**

प्रणिधानमपि च द्विविधं प्रशस्तं तथा अप्रशस्तं च।
समितिषु च गुप्तिषु च प्रशस्तं शेषमप्रशस्तं तु॥१०१॥

प्रणिधानमपि द्विप्रकारं । प्रशस्तं शुभं । तथाऽप्रशस्तमशुभमिति । समितिषु गुप्तिषु प्रशस्त प्रणिधानं । तथाशेषमप्रशस्तमेव । सम्यगयनं जीवपरिहारेण मार्गोद्योते धर्मानुष्ठानाय गमनं प्रयत्नपरस्य यतेर्यत् सा समितिः । अशुभमनोवाक्कायानां गोपनं स्वाध्यायध्यानपरस्य मनोवाक्कायसंवृत्ति-

गुप्तिः। एतासु यत्प्रणिधानं स युक्तोऽष्टप्रकारश्चारित्राचार इति। शेषं पुनर्वेदमप्रशस्तं प्रणिधानं तद्द्विविधमिन्द्रियनोइंद्रियभेदेन॥

इन्द्रियप्रणिधानस्वरूपप्रतिपादनार्थमाह—

**सद्दरसरूवगंधे फासे य मणोहरे य इदरे य।**
**जं रागदोसगमणं पंचविहं होइ पणिधाणं १०२**

शब्दरसरूपगंधे स्पर्शे च मनोहरे च इतरे च।
यत् रागद्वेषगमनं पंचविधं भवति प्रणिधानं ॥१०२॥

शब्दरसरूपगन्धस्पर्शेषु मनोहरेषु, शोभनेषु, इतरेष्वशोभनेषु, यद्रागद्वेषयोर्गमनं प्रापण तत्पंचप्रकारमिन्द्रियप्रणिधानं भवति। स्त्रीपुरुषादिप्रवृत्तेषु षड्जर्षभ-गान्धार-मध्यम-पंचम-धैवत-निषादभेदभिन्नेषु आरोहावरोहिस्थायिसंचारिचतुर्वर्णयुक्तेषु षडलंकारद्विविधकाकुभिन्नेषु मूर्च्छनास्थानादिप्रयुक्तेषु सुस्वरेषु यद्रागमापणं, तथा कोकिलमयूरभ्रमरादिशब्देषु वीणारावणहस्तवंशादिशब्देषु यद्रागकरणं, तयोष्ट्रखर-करभादिप्रयुक्तेषु दुःस्वरेषु उरःकण्ठशिरस्त्रिस्थानभेदभिन्नेष्वनिष्टेषु यद् द्वेषकरणं। तथा तिक्तकटुकषायाम्लमधुरभेदभिन्नेषु सुप्रयुक्तेषु मनोहरेष्वमनोहरेषु तीव्रतीव्रतरतीव्रतममन्दमन्दतरमन्दतमेषु गुडखंडदधिघृतपयःपानादिगतेषु निवकांजीरविषखलपत्रसकुष्टादिगतेषु च रसेषु यद्रागद्वेषयोः करणं। तथा स्त्रीपुरुषादिगतेषु गौरश्यामादिवर्णेषु रूपेषु

हावभावहेलांगजभावप्रयुक्तेषु लीलाविलासविच्छित्तिविभ्रमकिलिकिंचित–मोट्टायितकुट्टिमितविव्वोकललितविहृतैर्दशभिः स्वाभाविकैर्भावैर्युक्तेषु . शोभाकान्तिमाधुर्यधैर्यप्रागल्भ्यौदार्यैर्यत्नजैः प्रयोजितेषु द्वात्रिंशत्करणयुक्तेषु कटाक्षनिरीक्षणपरेषु नृत्तगीतहास्यादिमनोहरेषु रूपेषु तद्विपरीतेष्वमनोहरेषु रागद्वेषप्रयुक्तेषु ( कं )। द्विविधगन्धेषु शोभनाशोभनभेदभिन्नेषु आर्द्रमहिषीरक्षकर्दमकस्तूरीकर्पूरकालागुरुचन्दनकुंकुमजातिमल्लिकापाटलादिविभिन्नेषु तथा बिभीतकाशुचिस्वेदव्रणादिप्रभवेष्वनिष्टेषु यद्रागद्वेषाः करणं । तथाष्टप्रकारेषु स्पर्शेषु मृदुकर्कशशीतोष्णस्निग्धरूक्षगुरुलघुभेदभिन्नेषु स्त्रीवस्त्रतूलिकादिप्रभवेषु तथा भूमिशिलातृणशर्करादिप्रभवेषु यद्रागद्वेषकरणं तत्सर्वमिन्द्रियप्रणिधानमस्तीति ॥ १०२ ॥

इन्द्रियप्रणिधानमुक्तमपि यदिन्द्रियप्रणिधानं किंस्वरूपमिति पृष्टेऽत आह—

**णोइंदियपणिधाणं कोहे माणे तहेव मायाए।**
**लोहे य णोकसाए मणपणिधाणं तु तं वज्जे १०३**

नोइन्द्रियप्रणिधानं क्रोधे माने तथैव मायायां।
लोभे च नोकषाये मनःप्रणिधानं तु तत् वर्जयेत्

क्रोधे माने मायायां तथैव लोभे चैकैकस्मिंश्चतुर्विधे एतद्विषये यदेतन्मनःप्रणिधयनं मनोव्यापारस्तन्नोइन्द्रियप्रणिधानं ।

तदेतदिन्द्रियप्रणिधानं नोइन्द्रियप्रणिधानं चाप्रशस्तमयुक्तं वर्जयेत् वर्जयितव्यमिति ॥ १०३ ॥

समितिगुप्तिविषयः प्रणिधानयोगोऽष्टविध आचारोक्त इति प्रतिपादितं ततः काः समितयो गुप्तयश्चेत्याशंकायामाह—

**णिक्खेवणं च गहणं इरियाभासेसणा य समिदीओ**
**पदिठावणियं च तहा उच्चारादीणि पंचविहा १०४**

निक्षेपणं च ग्रहणं ईर्याभाषैषणाश्च समितयः।
प्रतिष्ठापनं च तथा उच्चारादीनां पंचविधा ॥ १०४ ॥

निक्षेपणं निक्षेपः पुस्तिकाकुण्डिकादिव्यवस्थापनं। तेषामेव ग्रहणमादानं समीक्ष्य, सैषादाननिक्षेपणसमितिः। धर्मार्थिनो यत्नपरस्य गमनमीर्यासमितिः। सावद्यरहितभाषणं भाषासमितिः। कृतकारितानुमतरहिताहारादानमशनसमितिः। समितिशब्दः प्रत्येकमभिसम्बध्यते। उच्चारादीनां मूत्रपुरीषादीनां प्रासुकप्रदेशे प्रतिष्ठापनं त्यागः प्रतिष्ठापनासमितिः। इत्येवं पंचविधा समितिरिति ॥ १०४ ॥

तत्र तावदीर्यासमितिस्वरूपप्रपंचार्थमाह—

**मग्गुज्जोवुपओगालंबणसुद्धीहिं इरियदो मुणिणो**
**सुत्ताणुवीचि भणिया इरियासमिदी पवयणम्मि ॥**

मार्गोद्योतोपयोगालंबनशुद्धिभिः ईर्यतो मुनेः ।
सूत्रानुवीच्या भणिता ईर्यासमितिः प्रवचने ॥१०५

मग्ग–मार्गः पन्थाः । उज्जोव–उद्योतश्चक्षुरादित्यादिप्रकाशः । उवओग–उपयोगो ज्ञानदर्शनविषयो यत्नः । आलंबण–देवतानिर्ग्रन्थयतिधर्मादिकारणं । एतेषां शुद्धयस्ताभिर्मार्गोद्योतोपयोगालम्बनशुद्धिभिर्यतो गच्छतो मुनेः सूत्रानुवीच्या प्रायश्चित्तादिसूत्रानुसारेण प्रवचने ईर्यासमितिर्भणिता गणधरदेवादिभिर्भणितेति शेषः ॥ १०५ ॥

तावद्गमनं विचार्यत उत्तरगाथयेति—

इरियावहपडिवण्णेणवलोगंतेण होदि गंतव्वं ।
पुरदो जुगप्पमाणं सयापमत्तेण संतेण ॥ १०६ ॥
ईर्यापथप्रतिपन्नेनावलोकयता भवति गंतव्यं ।
पुरतः युगप्रमाणं सदा अप्रमत्तेन सता ॥ १०६ ॥

कैलाशोर्जयन्तचम्पापावादितीर्थयात्रासन्यासदेवधर्मादिकारणेन शास्त्रश्रवणादिकेन वा समतिक्रमणश्रवणादिप्रयोजनेन वोदिते सवितरि प्रकाशप्रकाशिताशेषदिगन्ते विशुद्धदृष्टिसंचारे विशुद्धसंस्तरप्रदेशे ईर्यापथमार्गे प्रतिपन्नेन समीहमानेन कृतस्वाध्यायप्रतिक्रमणदेववन्दनेन पुरतोऽग्रतो युगमात्रं दस्तचतुष्टयप्रमाणमवलोकयता सम्यक्पश्यता स्थूलास्थूलजीवानप्रमत्तेन यत्नपरेण श्रुतशास्त्रार्थं स्मरता परिशुद्धमनो-

वाक्कायक्रियेण स्वाध्यायध्यानोपयुक्तेन सता सदा भवति गन्तव्यमिति ॥ १०६ ॥

पुनरपि श्लोकत्रयेण मार्गशुद्धिस्वरूपप्रतिपादनायाह—

**सयडं जाण जुग्गं वा रहो वा एवमादिया ।**
**बहुसो जेण गच्छंति सो मग्गो फासुओ भवे १०७**

शकटं यानं युग्यं वा रथो वा एवमादिकाः ।
बहुशो येन गच्छंति स मार्गः प्रासुकः भवेत् ॥१०७॥

शकट बलीवर्दादियुक्त काष्ठमय यंत्रं । यानं मत्तवारण युक्त पल्यङ्ककजातं, हस्त्यश्वमनुष्यादिभिरुह्यमान युग्य पीठिकादिरूपं मनुष्यद्वयेनोह्यमानं । रथो विशिष्टचक्रादियुक्तो मुद्गरभुसुण्डितोमरादिप्रहरणपूर्णो जात्यश्वादिभिरुह्यमानः इत्येवमादयोऽन्येऽपि बहुशोऽनेकवार येन मार्गेण गच्छन्ति स मार्गः प्रासुको भवेदिति ॥ १०७ ॥

के ते एवमादिका इत्यत आह—

**हत्थी अस्सो खरोढो वा गोमहिसगवेलया ।**
**बहुसो जेण गच्छंति सो मग्गो फासुओ भवे १०८**

हस्ती अश्वः खर उष्ट्रो वा गोमहिषगवेलकाः ।
बहुशः येन गच्छंति स मार्गः प्रासुको भवेत् १०८ ॥

हस्तिनोऽश्वा गर्दभा उष्ट्रा गावो महिष्यः गवेलिका अजा

अविकादयो बहुशो येन मार्गेण गच्छन्ति स मार्गः प्रासुको भवेत् ॥ १०८ ॥

इत्थी पुंसा व गच्छंति आदवेण य जं हदं ।
सत्थपरिणदो चेव सो मग्गो फासुओ हवे ॥१०९

स्त्रियः पुरुषा वा गच्छंति आतापेन च यो हतः ।
शस्त्रपरिणतश्चैव स मार्गः प्रासुकः भवेत् ॥ १०९ ॥

स्त्रियः पुरुषाश्च येन वा गच्छन्ति । आतापेनादित्यदावानलतापेन यो हतः । शस्त्रपरिणतः कृष्टीकृतः स मार्गः प्रासुको भवेत् । तेन मार्गेण यत्नवता स्वकार्येणोद्योतेन गन्तव्यमिति ॥ १०९ ॥

भाषासमितिस्वरूपं प्रतिपादयन्नाह—

सच्चं असच्चमोसं अलियादीदोसवज्जमणवज्जं ।
वदमाणस्सणुवीची भासासमिदी हवे सुद्धा ११०

सत्यं असत्यमृषा अलीकादिदोषवर्ज्यमनवद्यं ।
वदतः अनुवीच्या भाषासमितिः भवेत् शुद्धा ११०

सच्च–सत्यं स्वद्रव्यक्षेत्रकालभावापेक्षयास्ति, परद्रव्यक्षेत्रकालभावापेक्षया नास्ति, उभयापेक्षयास्ति च नास्ति च, अनुभयापेक्षावक्तव्यमित्येवमादि वदतोऽवितथं वचनं । तथा प्रमाणनयनिक्षेपैर्वदतः सत्यं वचनं । असच्चमोसं–असत्य-

मृषा यदसत्यं न भवति, अनृतं च न भवति सामान्यवचनं । अलीकं मृषावाद आदिर्येषां दोषाणां ते व्यलीकादिदोषास्तैर्वर्जितं व्यलीकादिदोषवर्जितं परुषतास्यादिदोषरहितं । अणवज्ज—अनवद्य हिंसादिपापागमवचनरहितं । इत्येवं सूत्रानुवीच्या प्रवचनानुसारेण वाचनापृच्छनानुप्रेक्षादिद्वारेणान्येनापि धर्मकार्येण वदतो भाषासमितिर्भवेदस्तुद्धेति ॥ ११० ॥

सत्यस्वरूप निरूपयन्नाह—

जणवदसम्मदठवणा णामे रूवे पडुच्चसच्चे य ।
संभावणववहारे भावे ओपम्मसच्चे य ॥ १११ ॥

जनपदसम्मतस्थापनायां नाम्नि रूपे प्रतीत्यसत्ये च
संभावनाव्यवहारे भावे औपम्यसत्ये च ॥ १११ ॥

सत्यशब्दः प्रत्येकमभिसंबध्यते । जनपदसत्य, बहुजनसम्मतसत्य, स्थापनासत्यं, नामसत्यं, रूपसत्य, प्रतीतिसत्यमन्यापेक्षसत्यमित्यर्थः, संभावनासत्यं, व्यवहारसत्यं, भावसत्यं उपमानसत्यं, इति दशधा सत्य भाव मिति सम्बन्धः ॥१११॥

एतानि दशसत्यानि विवृण्वन्नाह—

जणपदसच्चं जध ओदणादि रुच्चदि य सव्वभासेण
बहुजणसम्मदमवि होदि जं तु लोए जहा देवी ११२

जनपदसत्यं यथा ओदनादिरुच्यते च सर्वभाषया ।

बहुजनसम्मतमपि भवति यत्तु लोके यथा देवी ११२

जनपदसत्यं देशसत्यं। यथौदनादिरुच्यते सर्वभाषाभिः द्रविडभाषया चोरु इत्युच्यते। कर्णाटभाषया कूल इत्युच्यते। गौडभाषया भक्तमित्युच्यते। एवं नानादेशभाषाभिरुच्यमान ओदनो जनपदसत्यमिति जानीहि। बहुभिर्जनैर्यत्सम्मतं तदपि सत्यमिति भवति। यथा महादेवी, मानुष्यपि लोके महादेवीति। यथा देवो वर्षतीत्यादिक वचन लोक सम्मत सत्यमिति वाच्यं। न प्रतिबन्धः कार्यः एवं न भवतीति कृत्वा। प्रतिबन्धे सत्यमसत्य स्यादिति॥ ११२॥

ठवणा ठविदं जह देवदादि णामं च देवदत्तादि।
उक्कडदरोत्ति वण्णे रूवे सेओ जध बलाया ११३॥

स्थापना स्थापितं यथा देवतादि नाम च देवदत्तादि।
उत्कटतर इति वर्णेन रूपे श्वेता यथा बलाका॥११३॥

यद्यपि देवतादिप्रतिरूप स्थापनया स्थापितं। तथा च देवदत्तादिनाम। न हि तत्र देवतादिस्वरूपं विद्यते। नापि त (?) देवैर्दत्तोऽसौ। तथापि व्यवहारनयापेक्षया स्थापनासत्य,नामसत्यं च सत्यमित्युच्यते सद्भिरिति। अर्हत्प्रतिमा सिद्धप्रतिमादि तथा नागयक्षेन्द्रादिप्रतिमाश्च तत्सर्वं स्थापनासत्यं। तथा देवदत्त इन्द्रदत्तो यज्ञदत्तो विष्णुमित्र इत्येवमादिवचनं नामसत्यमिति। तथा वर्णेनोत्कृष्टतरति श्वेता बला-

का। यद्यपि तत्रान्यानि रक्तादीनि सम्भवन्ति रूपाणि, तथापि श्वेतेन वर्णेनोत्कृष्टतरा बलाका, अन्येषामविवक्षितत्वादिति रूपसत्यं द्रव्यार्थिकनयापेक्षया वाच्यमिति ॥११३॥

**अण्णं अपेक्खसिद्धं पडुच्चसच्चं जहा हवदि दिग्घं।**
**ववहारेण य सच्चं रज्झदि कूरो जहा लोए ११४**

अन्यदपेक्ष्यसिद्धं प्रतीत्यसत्यं यथा भवति दीर्घं।
व्यवहारेण च सत्यं रध्यते कूरो यथा लोके ॥ ११४॥

अन्यद्वस्तुजातमपेक्ष्य किंचिदुच्यमानं प्रतीत्यसत्यं भवति। यथादीर्घोऽयमित्युच्यते। वितस्तिमात्राद्धस्तमात्रं दीर्घं तथा द्विहस्तमात्रात्पंचहस्तमात्रं। पंचहस्तमात्राद्दशहस्तमात्रं। एवं यावन्मेरुमात्रं। तथैवं (च) ह्रस्ववृत्तचतुरस्रादि, कुरूप-सुरूप-पंडित मूर्ख-पूर्वापरादिकमपेक्ष्यसिद्धं निष्पन्नमपेक्ष्य सत्यमित्युच्यते। न तत्र विवादः कार्यः। तथा, रध्यदे पच्यते कूर ओदनः मण्डकाः घृतपूरा' इत्यादि लोके वचनं व्यवहारसत्यमिति वाच्यं। न तत्र विवादः कार्यः। यद्योदनः पच्यते भस्म भवति, मण्डका यदि पच्यन्ते भस्मीभवन्तीति कृत्वेति व्यवहारसत्यं वचनं सत्यमिति ॥ ११४ ॥

**संभावणा य सच्चं जदि णामेच्छेज्ज एव कुज्जंति।**
**जदि सक्को इच्छेज्जो जंबूदीवं हि पल्लत्थे ॥११५**

संभावना च सत्यं यदि नाम इच्छेत् एवं कुर्यात्।

यदि शक्रः इच्छेत् जंबूद्वीपं हि परिवर्तयेत् ॥११५॥

यदि नामैतदेवमिच्छेत्, एवं कुर्यात् यदेत संभावना सत्यं। सभाव्यत इति संभावना। सा द्विविधाभिनीतानभिनीतभेदेन। शक्यानुष्ठानाभिनीता। अस्ति सामर्थ्यं यदुत नाम तथा न सम्पादयेदभिनीता। यथा यदि नाम शक्र इच्छेज्जम्बूद्वीपं परिवर्तयेत्। संभाव्यत एतत्सामर्थ्यमिन्द्रस्य यज्जम्बूद्वीपमन्यथा कुर्यात्। अपि शिरसा पर्वतं भिन्द्यात्। सर्वमेतदनभिनीता सभावना सत्यं। अपि भवान् प्रस्थं भक्षयेत्। बाहुभ्यां गंगा तरेदेतदभिनीतं सम्भावनासत्यमिति सम्पाद्यासम्पाद्यभेदेनेति ॥ ११५ ॥

हिंसादिदोसविजुदं सच्चमकप्पियवि भावदो भावं
ओवम्मेण दु सच्चं जाणसु पलिदोवमादीया ११६
हिंसादिदोषावियुतं सत्यमकल्पितमपि भावतो भावं।
औपम्येन तु सत्यं जानीहि पल्योपमादिकं ॥११६॥

हिंसा आदिर्येषां दोषाणां ते हिंसादयस्तैर्वियुक्तं रहितं हिंसादिदोषविमुक्तं। हिंसास्तैन्याब्रह्मपरिग्रहादिग्राहकवचनरहितं सत्यं। अकल्पितमपि भावतोऽयोग्यमपि भावतः परमार्थतः सत्यं तत्। केनाचित् पृष्टस्त्वया चौरो दृष्टो न मया दृष्ट एवं वक्तव्यं। यद्यपि वचनमेतदसत्यं तथापि परमार्थतः सत्यं हिंसादिदोषरहितत्वात्। यथा येन येन

परपीडोत्पद्यते परलोक मर्त्यइहलोकं च प्रति, तत्तद्वचनं सत्यमपि त्याज्यं रागद्वेषसहितत्वात् । सत्यमपि हिंसादिदोषसहितं न वाच्यमिति भावसत्य । औपम्येन च युक्तं यद्वचनं तदपि सत्यं जानीहि । यथा पल्योपमादिवचन । उपमामात्रमेतत् । न हि कुशलो योजनमात्रः केनापि रोमच्छेदैः पूर्यते । एव सागरो रज्जुः प्रतरागुलं सूच्यगुल घनागुलं श्रेणी लोकप्रतरो लोकश्चन्द्रमुखी कन्या इत्येवमादयः शब्दाः उप मानवचनानि उपमासत्यानीति वाच्यानि । न तत्र विवादः कार्यः । इत्येतद्दशप्रकारं सत्यं वाच्य ।

तथा सन्धिनामतद्धितसमासाख्यातकृदौणादियुक्तं, पक्षहेतुदृष्टान्तोपनयनिगमनसहित, छलजातिनिग्रहस्थानादिविवर्जित, लोकसमयस्ववचनविरोधरहितं, प्रमाणोपपन्नं, नैगमादिनयपरिगृहीतं, जातियुक्तियुक्त, मैत्रीप्रमोदकारुण्यमाध्यस्थ्यवचनसहितं, अनिष्ठुरमकर्कशमनुद्धतमर्थवत्, श्रवणकान्त, सुललिताक्षरपदवाक्यविरचितं, हेयोपादेयसयुक्त—इत्थंभूतं सत्य वाच्यं । लिंगसख्याकालकारकपुरुषोपग्रहसमेत धातुनिपातवलावग्च्छन्दोऽलकारादिसमन्वित, वाच्यमिति सम्बन्धः ॥ ११६ ॥

एतद्व्यतिरिक्तमसत्यमिति प्रतिपादयन्नाह—

**तव्विवरीदं मोसं तं उभयं जत्थ सच्चमोसं तं ।**
**तव्विवरीदा भासा असच्चमोसा हवदि दिट्ठा ११७**

तद्विपरीतं मृषा तदुभयं यत्र सत्यमृषा तत् ।
तद्विपरीता भाषा असत्यमृषा भवति दृष्टा ॥११७॥

तद्गपकारसत्यविपरीत पूर्वोक्तस्य सर्वस्य प्रतिकूलमसत्यं मृषा । तयोःसत्यासत्ययोरुभयं यत्र पदे वाक्ये वा सत्यमृषावचन तत् गुणदोषसहितत्वात् । तस्मात्सत्यमृषावादाद्विपरीता भ षा वचनोक्तिरसत्यमृषोक्तिः । सा भवति दृष्टा जिनैः । न सा सत्या न मृषेति सम्बन्धः ॥ ११७ ॥

असत्यमृषाभाषा विस्तरयन्नाह —

आमंतणि आणवणी
जायणिसंपुच्छणी य पण्णवणी ।
पच्चक्खाणी भासा
छट्ठी इच्छाणुलोमा य ॥ ११८ ॥

आमंत्रणी आज्ञापनी याचनी संपृच्छनी च प्रज्ञापनी
प्रत्याख्यानी भाषा षष्ठी इच्छानुलोमा च ॥ ११८॥

आमन्त्र्यतेऽनयामन्त्रणी । गृहीतवाच्यवाचकसंबन्धो ऽन्येन शब्देन प्रत्यभिमुखी क्रियते यया सामन्त्रणी भाषा । यथा हे देवदत्त इत्यादि । आज्ञाप्यतेऽनयेत्याज्ञापना । आज्ञा तवाहं ददामीत्येवमादि वचनमाज्ञापनी भाषा । याच्यतेऽनया याचना । यथा याचयाम्यहं त्वा किंचिदिति । पृच्छ्यते

नयेति पृच्छना । यथा पृच्छाम्यहं त्वामित्यादि । प्रज्ञाप्यतेऽ नयेति प्रज्ञापना । यथाप्रज्ञापना ( य ) म्यहं त्वामित्यादि । प्रत्याख्यायतेऽ नयेति प्रत्याख्याना यथा प्रत्याख्यान मम दीयतामित्यादि भाषासमितिः सर्वत्र सम्बन्धः । इच्छया लोमानुकूलेच्छालोमा सर्वत्रानुकूला । यथा एवं करोमीत्यादि ११८

संसयवयणी य तहा असच्चमोसा य अट्ठमी भासा
णवमी अणक्खरगया असच्चमोसा हवदि दिट्ठा

संशयवचनी च तथा असत्यमृषा च अष्टमी भाषा ।
नवमी अनक्षरगता असत्यमृषा भवति दृष्टा ॥ ११९

संशयमव्यक्तं वक्तीति संशयवचनी । संशयार्थप्रत्यायना नभिव्यक्तार्था यस्माद्वचनात्सदेहरूपादर्थो न प्रतीयते तद्वचनं संशयवचनी भाषेत्युच्यते । यथा दन्तरहितातिबालातिवृद्धा वचनं, महिष्यादीना च शब्दः । तथैवाऽसत्यमृषा साष्टमी भाषा । नवमी पुनरनक्षरगता । यस्या नाक्षराण्यभिव्यक्तानि ककारचकारमकारादीनामनभिव्यक्तिर्यत्र सा नवमी भाषान क्षरगता । सा च द्वीन्द्रियादीना भवत्येव । नासत्यमृषा भाषा नव प्रकारा भवति । विशेषाप्रतिपत्तेरसत्या सामान्यप्र प्रतिपत्तेर्न मृषा । आपत्रणरूपेणाभिमुखीकरणेन मृषा परन्तुऽन्यस्यार्थस्याप्रतिपत्तेरसत्या । तथाज्ञादानेन न मृषा परचाज्ञि द्यास्यतीति न ज्ञायते तेन न सत्या । तथा याच्ञामात्रेण न

तद्विपरीतं मृषा तदुभयं यत्र सत्यमृषा तत् ।
तद्विपरीता भाषा असत्यमृषा भवति दृष्टा ॥११७॥

तद्दशप्रकारसत्यविपरीतं पूर्वोक्तस्य सर्वस्य प्रतिकूलमसत्यं मृषा । तयोः सत्यासत्ययोरुभयं यत्र पदे वाक्ये वा सत्यमृषावचनं तत् गुणदोषसहितत्वात् । तस्मात्सत्यमृषावादाद्विपरीता भाषा वचनोक्तिरसत्यमृषोक्तिः । सा भवति दृष्टा जिनैः । न सा सत्या न मृषेति सम्बन्धः ॥ ११७ ॥

असत्यमृषाभाषां विवृण्वन्नाह—

आमंतणि आणवणी
जायणिसंपुच्छणी य पण्णवणी ।
पच्चक्खाणी भासा
छट्ठी इच्छाणुलोमा य ॥ ११८ ॥

आमंत्रणी आज्ञापनी याचनी संपृच्छनी च प्रज्ञापनी
प्रत्याख्यानी भाषा षष्ठी इच्छानुलोमा च ॥ ११८॥

आमन्त्र्यतेऽनयामन्त्रणी । गृहीतवाच्यवाचकसंबन्धो येन स आमंत्रं सन्नभिमुखी क्रियते यथा सामंत्रणी भाषा । यथा हे देवदत्त इत्यादि । आज्ञाप्यतेऽनयेत्याज्ञापना । आज्ञां तवाहं ददामीत्येवमादि वचनमाज्ञापनी भाषा । याच्यतेऽनया याचना । यथा याचयाम्यहं त्वां किंचिदिति । पृच्छयते

नयेति पृच्छना । यथा पृच्छाम्यहं त्वामित्यादि । प्रज्ञाप्यतेऽनयेति प्रज्ञापना । यथाप्रज्ञापना ( य ) म्यहं त्वामित्यादि । प्रत्याख्यायतेऽनयेति प्रत्याख्याना यथा प्रत्याख्यानं मम दीयतामित्यादि भाषासमितिः सर्वत्र संबन्धः । इच्छया लोमानुकूलेच्छालोमा सर्वत्रानुकूला । यथा एवं करोमीत्यादि ११८

**संसयवयणी य तहा असच्चमोसा य अट्ठमी भासा**
**णवमी अणक्खरगया असच्चमोसा हवदि दिट्ठा**

संशयवचनी च तथा असत्यमृषा च अष्टमी भाषा ।
नवमी अनक्षरगता असत्यमृषा भवति दृष्टा ॥ ११९

संशयमव्यक्तं वक्तीति संशयवचनी । संशयार्थस्य ज्ञापनानभिव्यक्तार्था यस्माद्वचनात्संदेहरूपादर्थो न प्रतीयते तद्वचनं संशयवचनी भाषेत्युच्यते । यथा दन्तरहितातिबालातिवृद्धावचनं, महिष्यादीनां च शब्दः । तथैवासत्यमृषा साष्टमी भाषा । नवमी पुनरनक्षरगता । यस्यां नाक्षराण्यभिव्यक्तानि ककारचकारपकारादीनामनभिव्यक्तिर्यत्र सा नवमी भाषानक्षरगता । सा च द्वीन्द्रियादीनां भवत्येव । नासत्यमृषा भाषा नव प्रकारा भवति । विशेषाप्रतिपत्तेरसत्या सामान्यस्य प्रतिपत्तेर्न मृषा । आमंत्रणरूपेणाभिमुखीकरणेन मृषा पश्चादन्यस्यार्थस्याप्रतिपत्तेरसत्या । तथाज्ञादानेन न मृषा पश्चात्किं करिष्यतीति न ज्ञायते तेन न सत्या । तथा याच्वामात्रेण न

मृषा, उत्तरकालं किं याचयिष्यतीति न ज्ञायते ततो न सत्या। तथा प्रश्नमात्रेण न मृषा पश्चान्न ज्ञायते किं पृच्छयतेऽनेनेति न सत्या। तथा प्रत्याख्यानसामान्यरूपस्य याचनायाः प्रतीतेर्न मृषा पश्चात्कं प्रत्याख्यानं दास्यतीति न ज्ञायते तेन न सत्या। तथेच्छाया एवं करोमीति भणनेन न मृषा किंचित् पश्चात्किं करिष्यतीति न ज्ञायते तेन न सत्या। तथाक्षराणि संदिग्धानि प्रतीयन्ते तेन न मृषा, अर्थः सन्दिग्धो न प्रतीयते तेन न सत्या। तथा शब्दमात्रं प्रतीयते तेन न मृषा, अक्षराणामर्थस्य चाप्रतीतेर्न सत्येति। अनेन न्यायेन नवप्रकारा असत्यमृषाभाषा व्याख्यातेति॥ ११९॥

पुनरपि यद्वचनं सत्यमुच्यते तदर्थमाह—

**सावज्जजोग्गवयणं वज्जंतोऽवज्जभीरु गुणकंखी।**
**सावज्जवज्जवयणं णिच्चं भासेज्ज भासंतो॥ १२०॥**

सावद्यायोग्यवचनं वर्जयन् अवद्यभीरुः गुणकांक्षी।
सावद्यवर्ज्यवचनं नित्यं भाषयेत् भाषयन्॥ १२०॥

यदि मौनं कर्तुं न शक्नोति तत एवं भाषेत—सावद्यं सपापमयोग्यं यकारमकारादियुक्तं वचनं वर्जयेत्। अवद्यभीरुः पापभीरुः। गुणाकांक्षी हिंसादिदोषवर्जनपरः। सावद्यवर्ज्यं वचनं नित्यं सर्वकालं भाषयन् भाषयेत्। अन्वयव्यतिरेकेण वचनमेतत्। नैतत्र पौनरुक्त्यं द्रव्यार्थिकपर्यायार्थिकशि-

प्यानुग्रहपरादिति ॥ २० ॥

अशनसमितिस्वरूपं प्रतिपादयन्नाह—

**उग्गम उप्पादणएसणेहिं पिंडं च उवधि सेज्जं च।**
**सोधंतस्स य मुणिणो परिसुज्झइ एसणासमिदी**

उद्गमोत्पादनैषणैः पिंडं च उपधिं शय्यां च ।
शोधयतश्च मुनेः परिशुद्ध्यति एषणासमितिः १२१

उद्गच्छत्युत्पद्यत आहारो यैर्दोषैस्त उद्गमदोषाः । उत्पाद्यते निष्पाद्यत आहारो यैस्त उत्पादनादोषाः । अश्यते भुज्यते आहारो वसत्यादयो वा यैस्तेऽशनदोषास्तैः । पिण्ड आहारः । उपधिः पुस्तकपिच्छकादिः । शय्या वसत्यादीन् शोधयतः सुष्ठु सावद्यपरिहारेण निरूपयतो, मुनेः परिशुद्ध्यतेऽशनसमितिः । अशनस्य सम्यग्विधानेन दोषपरिहारेणेति वा चरणमशनसमितिः । उद्गमोत्पादनाशनदोषैः पिण्डं उपधिं शय्यां शोधयतो मुनेः परिशुद्ध्यतेऽशनसमितिरिति । एत उद्गमादयो दोषाः सप्रपंचेन पिण्डशुद्धौ वक्ष्यन्त इति नेह प्रपन्यन्ते, पुनरुक्तदोषभयात् ।

कथमेतान् दोषान्परिहरति मुनिरित्याशंकायामाह च-कारः( १ )सूचितार्थं । सवितुरुदये देववन्दनां कृत्वा घटिकाद्वयेऽतिक्रान्ते श्रुतभक्तिगुरुभक्तिपूर्वकं स्वाध्यायं गृहीत्वा

---

१ सिद्धगुरुभेव च इत्यपि पाठः ।

वाचनापृच्छनानुप्रेक्षापरिवर्तनादिकं सिद्धान्तादेर्विधाय घटिकाद्वयमप्राप्तमध्यान्हादरात् स्वाध्याय श्रुतभक्तिपूर्वकमुपसंहृत्यावसथो दूरतो मूत्रपुरीषादीन् कृत्वा पूर्वापरकायविभागमवलोक्य हस्तपादादिमक्षालनं विधाय कुण्डिका पिच्छिकां गृहीत्वा मध्यान्हदेववन्दनां कृत्वा पूर्णोदरबालकान भिक्षाहारान् काकादिवलीनन्यानपि लिंगिनो भिक्षावेलायां ज्ञात्वा प्रशान्ते धूमप्रमुशलादिशब्दे गोचरं प्रविशेन्मुनिः। तत्र गच्छन्नातिद्रुतं, न मन्दं, न विलम्बितं गच्छेत्। ईश्वरदरिद्रादिकुलानि न विवेचयेत्। न वर्त्मनि जल्पेचिष्ठेत्। हास्यादिकान् विवर्जयेत्। नीचकुलेषु न प्रविशेत्। सूतकादिदोषदूषितेषु शुद्धेष्वपि कुलेषु न प्रविशेत्। द्वारपालादिभिर्निषिद्धो न प्रविशेत्। यावन्तं प्रदेशमन्ये भिक्षाहाराः प्रविशन्ति तावन्तं प्रदेशं प्रविशेत्। विरोधनिमित्तानि स्थानानि वर्जयेत्। दुष्टखरोष्ट्रमहिषगोहस्तिव्यालादीन् दूरतः परिवर्जयेत्। मत्तोन्मत्तमदावलिप्तान् सुष्ठु वर्जयेत्। स्नानविलेपनमण्डनरतिक्रीडाप्रसक्ता योषितो नावलोकयेत्। विनयपूर्वकं विधृतस्तिष्ठेत्। सम्यग्विधानेन दीयमानमाहारं प्रासुकं सिद्धभक्तिं कृत्वा प्रतीच्छेत्। स(श)तनपतनगलनमकुर्वन् निश्छिद्रं पाणिपात्रं नाभिप्रदेशे कृत्वा शुरशुरशब्दादिवर्जितं भुञ्जीत। योषितः स्तनजघनोरुनाभिकटिनयनललाटमुखदन्तौष्ठगण्डुककान्तरजंघापादलीलागतिविलासगीतनृत्यहासस्निग्धदृष्टिकटाक्षनिरीक्षणादीन्नावलोकयेत्। एवं भुक्त्वा पूर्णोदरोऽन्त-

रायादपूर्णोदरो वा मुखहस्तपादान् प्रक्षाल्य शुद्धोदकपूर्णां कुण्डिकां गृहीत्वा निर्गच्छेत् । धर्मकार्यमन्तरेण न गृहान्तरं प्रविशेत् । एवं जिनालयादिप्रदेशं सम्प्राप्य प्रत्याख्यानं गृहीत्वा प्रतिक्रामेदिति ॥ १२१ ॥

आदाननिक्षेपणसमितिस्वरूपं प्रतिपादयन्नाह—

**आदाणे णिक्खेवे पडिलेहिय चक्खुणा पमज्जेज्जो**
**दव्वं च दव्वठाणं संजमलद्धीय सो भिक्खू १२२**

आदाने निक्षेपे प्रतिलेख्य चक्षुषा प्रमार्जयेत् ।
*द्रव्यं च द्रव्यस्थानं संयमलब्ध्या स भिक्षुः ॥ १२२*

आदाने ग्रहणे । निक्षेपे त्यागे । प्रतिलेख्य सुष्ठु निरीक्षयित्वा चक्षुषा पश्चात्पिच्छिकया सम्मार्जयेत् प्रतिलेखयेत् । द्रव्यं द्रव्यस्थानं च । पुस्तिका कुण्डिकादि द्रव्यं, यत्र तद्द्रव्यमवस्थितं तत्स्थानं । संयमलब्ध्या स भिक्षुर्यतिः । आत्मपरयोग्यवस्तुनो ग्रहणकाले निक्षेपकाले वा चक्षुषा द्रव्यं द्रव्यस्थानं च प्रतिलेख्य पिच्छिकया सम्मार्जयेदिति १२२

येन प्रकारेणादाननिक्षेपसमितिः शुद्धा भवति तथाह—

**सहसाणाभोइयदुप्पमज्जिद अप्पच्चुवेक्खणा दोसा**
**परिहरमाणस्स हवे समिदी आदाणणिक्खेवा ॥**

सहसानाभोगितदुष्प्रमार्जिताप्रत्युपेक्षणान् दोषान् ।

परिहरतः भवेत् समितिः आदानानिक्षेपा ॥ १२३ ॥

सहसा शीघ्रं व्यापारान्तरं प्रत्युद्गतमनसा निक्षेपमादानं वा । अनाभोगितमनालोकनं स्वस्थचित्तवृत्त्याग्रहणमादानं वा अनालोक्य द्रव्यं द्रव्यस्थानं यत्क्रियते तदानाभोगितं दुष्प्रमार्जितं दुष्पमार्जितं पिच्छिकयावष्टभ्य प्रतिलेखनं । अप्रत्युपेक्षणं किंचित् संस्थाप्य पुनः कालान्तरेणालोकनं । एतान् दोषान् परिहरतो भवेदादाननिक्षेपसमितिरिति । किमुक्तं भवति, स्वस्थवृत्त्या द्रव्यं द्रव्यस्थानं च चक्षुषावलोक्य मृदुप्रतिलेखनेन सम्मार्ज्यादानं ग्रहणं वा कर्तव्यं । स्थापितस्य पुस्तकादेः पुनः कतिपयदिवसैरालोकनं कर्तव्यमिति १२३

उच्चारप्रस्रवणसमितिस्वरूपनिरूपणायाह—

वणदाहकिसिमसिकदे थंडिल्लेणुप्परोध वित्थिण्णे
अवगदजंतु विवित्ते उच्चारादी विसज्जेज्जो १२४

वनदाहकृषिमषिकृते स्थंडिलेनुपरोधे विस्तीर्णे ।
अपगतजंतौ विविक्ते उच्चारादीन् विसर्जयेत् ॥ १२४

वनदाहो दावानलः । कृषिः शीरेणानेकवारभूमेर्विदारणं । मषी श्मशानांगारानलादिप्रदेशः । कृतशब्दः प्रत्येकमभिसम्बध्यते । वनदाहीकृते, कृषीकृते, मषीकृते, स्थंडिलीकृते, ऊषरीकृते । अनुपरोधे लोकोपरोधवर्जिते । विस्तीर्णे विशाले । अपगता अविद्यमाना जन्तवो द्वीन्द्रियादयो यत्र

सोऽपगतजन्तुस्तस्मिन्नपगतजन्तौ । विविक्तेऽशुच्याद्यप-स्कररहिते जनरहिते वा उच्चारादीन् विसर्जयेत् परित्य-ज्येत् । अचित्तभूमिदेश इत्यनेन सह सम्बन्धः कर्तव्य इति १२४

अथ के ते उच्चारादय इत्याशंकायामाह—

**उच्चारं पस्सवणं खेलं सिंघाणयादियं दव्वं ।**
**अच्चित्तभूमिदेसे पडिलेहित्ता विसज्जेज्जो १२५**

उच्चारं प्रश्रवणं खेलं सिंघाणकादिकं द्रव्यं ।
अचित्तभूमिदेशे प्रतिलेख्य विसर्जयेत् ॥ १२५ ॥

उच्चारं अशुचिः । प्रस्रवणं मूत्रं । खेलं श्लेष्माणं । सिंघाणकं नासिकापस्करं । आदिशब्देन केशोत्पाटवालान् मद्यमादवातपित्तादिदोषान् सप्तधातुं छर्द्यादिकं च पूर्वोक्त-विशेषणविशिष्ट अचित्तभूमिदेशे हरिततृणादिरहिते प्रतिले-खयित्वा सुष्ठु निरूप्य विसर्जयेत् । पूर्वं सामान्यव्याख्यात-मिदं तु सप्रपंचमिति कृत्वा न पौनरुक्त्यमिति ॥ १२५ ॥

अथ रात्रौ कथमिति चेदित्यत आह—

**रादो दु पमज्जित्ता पण्णसमणपेक्खिदम्मि ओगासे**
**आसंकविसुद्धीए अपहत्थगफासणं कुज्जा १२६**

रात्रौ तु प्रमार्जयित्वा प्रज्ञाश्रमणप्रेक्षिते अवकाशे ।
आशंकाविशुद्ध्यै अपहस्तकस्पर्शनं कुर्यात् ॥ १२६ ॥

रात्रौ तु मज्ञाश्रवणेन वैयावृत्यादिकुशलेन साधुना विनयपरेण सर्वसंघप्रतिपालकेन वैराग्यपरेण जितेन्द्रियेण प्रेक्षिते सुष्ठुदृष्टेऽवकाशैकप्रदेशे पुनरपि सचक्षुषा प्रतिलेखनेन प्रमार्जयित्वोच्चारादीन् विसृजेत् । अथ यदि तत्र सूक्ष्मजीवाद्याशंका भवेत्तत आशंकाविशुद्धये आशंकाविशुद्ध्यर्थं अपहस्तकस्पर्शनं कुर्यात्-विपरीतकरतलेन मृदुना स्पर्शनं कर्तव्यमिति ॥

तेन प्रज्ञाश्रवणेन सति सवितरि चक्षुर्विषये च सति त्रीणि स्थानानि दृष्टव्यानि भवन्ति, किमर्थमित्याह—

जदि तं हवे असुद्धं
विदियं तदियं अणुण्णए साहू ।
लहुए अणिच्छयारे
ण देज्ज साधम्मिए गुरुए ॥ १२७ ॥

यदि तत् भवेत् अशुद्धं
द्वितीयं तृतीयं अनुमन्येत साधुः ।
लघु अनिच्छाकारे
न देयं सधर्मिणि गुरु अयः ॥१२७॥

यदि तत्प्रथमस्थानं प्रेक्षितमशुद्धं भवेद् द्वितीयं स्थानमनुजानात्यनुमन्येत । तदपि यद्यशुद्धं तृतीयं स्थानमनुजानाति जानीत ( वे ) गच्छेद्वा साधुः संयतः । अथ कदाचित्तस्य

साधोर्व्याधितस्यान्यस्य वा लघुशीघ्रपशुद्धेऽपि प्रदेशे मलच्युतिरनिच्छया विनाभिप्रायेण भवेत् ततस्तस्मिन् सधर्मिणि धार्मिके साधौ अइ (ए) अयः प्रायश्चित्तं तद्गुरु न दातव्यं । अयः पुण्यं, अयनिमित्तत्वात् प्रायश्चित्तमप्ययमित्युच्यते । यत्नपरस्य न बहु प्रायश्चित्तं भवति यतः । अथवा लहुए-लघु शीघ्रं । अणिच्छयारे अनिच्छया कुर्वति मलच्युतिं सधर्मिणि महत्प्रायश्चित्तं न दातव्यं । यद्यपि प्रायश्चित्त नात्रोक्तं तथापि सामर्थ्याल्लभ्यतेऽन्यस्याश्रुतत्वात् । अथवा लघुकेन कुशलेनेच्छाकारेणानुकूलेन प्रज्ञाश्रवणेन यदि प्रथमस्थानं शुद्धं द्वितीयं तृतीयस्य न वानुज्ञाप्य सम्बोध्य सधर्मिणि साधौ गुरौ वा प्रासुक स्थानं दातव्यमिति॥ १२७ ॥

अनेन क्रमेण किंकृतं भवतीति चेदत आह—

पदिठवणासमिदीवि य
तेणेव कमेण वण्णिदा होदि ।
वोसरणिज्जं दव्वं
तु थंडिले वोसरंतस्स ॥ १२८

प्रतिष्ठापनासमितिरपि च तेनैव क्रमेण वर्णिता भवति व्युत्सर्जनीयं द्रव्यं तु स्थंडिले व्युत्सृजतः ॥१२८॥

तेनैवोक्तक्रमेण प्रतिष्ठापनासमितिरपि वर्णिता व्याख्याता भवति । तेनोक्तक्रमेण व्युत्सर्जनीयं त्यजनीयं । स्थंडिले

व्यावर्णितस्वरूपे व्युत्सृजतः परित्यजतः प्रतिष्ठापनाशुद्धिः स्यादिति ॥ १२८ ॥

एताभिः समितिभिः सह विहरन् किंविशिष्टः स्यादित्याह—

**एदाहिं सया जुत्तो समिंदीहिं महिं विहरमाणो दु ।**
**हिंसादीहिं ण लिप्पइ जीवणिकाआउले साहू १२९**

एताभिः सदा युक्तः समितिभिः मह्यां विहरमाणस्तु ।
हिंसादिभिर्न लिप्यते जीवनिकायाकुलायां साधुः

एताभिः समितिभिः सया—सदा सर्वकालं युक्तो मह्यां सर्वत्र विहरमाणः साधुर्हिंसादिभिर्न लिप्यते जीवनिकायाकुले लोके इति ॥ १२९ ॥

ननु जीवसमूहमध्ये कथं साधुर्हिंसादिभिर्न लिप्यते ? चेदित्थं न लिप्यते इति दृष्टान्तमाह—

**पउमिणिपत्तं व जहा**
**उदएण ण लिप्पदि सिणेहगुणजुत्तं ।**
**तह समिदीहिं ण लिप्पदि**
**साहू काएसु इरियंतो॥ १३०॥**

पद्मिनीपत्रं वा यथा उदकेन

न लिप्यते स्नेहगुणयुक्तं ।
तथा समितिभिः न लिप्यते
साधुः कायेषु ईर्यन् ॥ १३० ॥

पद्मिनीपत्रं जले वृद्धिंगतमपि यथोदकेन न लिप्यते, स्नेहगुणयुक्त यतः तथा समितिभिः सह विहरन साधुः पापेन न लिप्यते कायेषु जीवेषु तेषां वा मध्ये विहरन्नपि यत्नपरो यतः इति ॥ १३० ॥

पुनरपि दृष्टान्तेन पोषयन्नाह—

सरवासेहिं पडंते-
हिं जह दिढकवचो ण भिज्जदि सरेहिं ।
तह समिदीहिं ण लिप्पइ
साहू काएसु इरियंतो ॥ १३१ ॥

शरवर्षैः पतद्भिः यथा दृढकवचो न भिद्यते शरैः ।
तथा समितिभिः न लिप्यते साधुः कायेषु ईर्यन् ॥

शरवर्षैः पतद्भिः संग्रामे यथा दृढकवचो दृढवर्म न भिद्यते शरैस्तीक्ष्णनाराचतोमरादिभिस्तथा षड्जीवनिकायेषु समितिभिर्हेतुभूताभिः साधुः पापेन न लिप्यते पर्यटन्नपीति ॥१३१॥

यत्नपरस्य गुणमाह—

जत्थेव चरदि बालो परिहारण्हू वि चरदि तत्थेव ।
वज्झदि पुण सो बालो परिहारण्हू विमुच्चदि सो ॥
यत्रैव चरति बालः परिहरमाणोपि चरति तत्रैव ।
बध्यते पुनः स बालः परिहरमाणो विमुच्यते सः ॥

यत्रैव चरति भ्रमत्याचरतीति वा बालोऽज्ञानी [ स ] जीवादिभेदातत्त्वज्ञः । परिहरमाणोऽपि चरत्यनुष्ठानं करोति भ्रमतीति वा तत्रैव लोके बध्यते कर्मणा लिप्यते पुनरसौ बाल अज्ञानः । परिहरमाणो यत्नपरः पुनः स विमुच्यते कर्मणा यस्मादेवगुणा समितयः ॥ १३२ ॥

तम्हा चेट्ठिदुकामो जइया तइया भवाहि तं सामिदो
सामिदो हु अण्ण ण दियदि खवेदि पोराणयं कम्मं
तस्मात् चेष्टितुकामो यदा तदा भव त्वं समितः ।
समितः खलु अन्यत् नाददाति क्षपयति पुराणं कर्म ॥

तस्माच्चेष्टितुकामः पर्यटितुमना यदा तदा यत्र तत्र यथा तथा भव त्वं समितः समितिपरिणतः । हि यस्मात् समितोऽन्यन्नवं कर्म नाददाति न गृह्णाति । पुराणकं सत्कर्म च क्षपयति निर्जरयतीति ॥ १३३ ॥

एवं समितिस्वरूपं व्याख्याय गुप्तीनां सामान्यविशेषभूतं च लक्षणमाह—

**मणवचकायपउत्ती भिक्खू सावज्जकज्जसंजुत्ता**
**खिप्पं णिवारयंतो तीहिं दु गुत्तो हवदि एसो १३४**

मनोवाक्कायप्रवृत्तिं भिक्षुः सावद्यकार्यसंयुक्तां ।
क्षिप्रं निवारयन् त्रिभिस्तु गुप्तो भवति एषः ॥ १३४॥

प्रवृत्तिशब्दः प्रत्येकमभिसम्बध्यते । मनःप्रवृत्तिं वाक्प्रवृत्तिं कायप्रवृत्तिं च । किंविशिष्टां, सावद्यकार्यसंयुक्तां हिंसादिपापविषयां । भिक्षुः साधुः शीघ्रं निवारयंस्त्रिगुप्तो भवत्येषः । गुप्तेः सामान्यलक्षणमेतत् ॥ १३४ ॥

विशेषलक्षणमाह—

**जा रायादिणियत्ती मणस्स जाणाहि तं मणोगुत्ती**
**अलियादिणियत्ती वा मोणं वा होदि वचिगुत्ती ॥**

या रागादिनिवृत्तिः मनसः जानीहि तां मनोगुप्तिं ।
अलीकादिनिवृत्तिः वा मौनं वा भवति वचोगुप्तिः १३५

रागद्वेषादिभ्यो मनसो या निवृत्तिर्येनासौ तेषां परिहारस्तां जानीहि मनोगुप्तिं मनःसंवृतिं । अलीकादिभ्यश्चासत्याभिधानेभ्यश्च वचसो या निवृत्तिः मौनं ध्यानाध्ययनचिंतनं च यत्पूर्णाभावेनासौ या वा गुप्तिर्भवति ॥ १३५ ॥

कायगुप्त्यर्थमाह—

कायकिरियाणियत्ती काउस्सग्गो सरीरगे गुत्ती
हिंसादिणियत्ती वा सरीरगुत्ती हवदि एसा १२६

कायक्रियानिवृत्तिः कायोत्सर्गः शरीरके गुप्तिः ।
हिंसादिनिवृत्तिर्वा शरीरगुप्तिर्भवति एषा ॥ १२६ ॥

कायक्रियानिवृत्तिः शरीरचेष्टाया अप्रवृत्तिः शरीरगुप्तिः कायोत्सर्गो वा कायगुप्तिः । हिंसादिभ्यो निवृत्तिर्वा शरीरगुप्तिर्भवत्येषा । सम्यग्दर्शनज्ञानचारित्राणि गुप्यन्ते रक्ष्यन्ते यकाभिस्ता गुप्तयः । अथवा मिथ्यात्वासंयमकषायेभ्यो गोप्यते रक्ष्यते आत्मा यकाभिस्ता गुप्तय इति ॥ १२६ ॥

दृष्टान्तद्वारेण तासां माहात्म्यमाह—

खेत्तस्स वई णयर—
स्स खाइया अहव होइ पायारो ।
तह पावस्स णिरोहो
ताओ गुत्तीउ साहुस्स ॥ १२७ ॥

क्षेत्रस्य वृतिः नगरस्य खातिका अथवा भवति प्राकारः
तथा पापस्य निरोधः ताः गुप्तयः साधोः ॥ १२७ ॥

यथा क्षेत्रस्य शस्यस्य वृतिः रक्षा नगरस्य वा खातिकाथवा प्राकारो यथा गुप्तिस्तथा पापस्याशुभकर्मणो निरोधः संवृतिस्ता गुप्तयः साधोः संयतस्येति ॥ १२७ ॥

यस्मादेवंगुणा गुप्तयः—

**तम्हा तिविहेण तुमं णिच्चं मणवयणकायजोगेहिं ।**
**होहिसु समाहिदमई णिरंतरं झाण सज्झाए १३८**

तस्मात् त्रिविधेन त्वं नित्यं मनोवचनकाययोगैः ।
भव समाहितमतिः निरंतरं ध्याने स्वाध्याये ॥१३८॥

तस्मात्त्रिविधेन कृतकारितानुमतैस्त्वं साधो ! मनोवाक्काययोगैर्भव सुसमाहितमतिः सम्यक्स्थापितबुद्धिः । निरन्तरमजस्रं ध्याने स्वाध्याये चेति ॥ १३८ ॥

समितिगुप्तिस्वरूपं संक्षेपयन्नाह—

**एताओ अट्ठपवयणमादाओ णाणदंसणचरित्तं ।**
**रक्खंति सदा मुणिणो मादा पुत्तं व पयदाओ ॥**

एता अष्टप्रवचनमातरः ज्ञानदर्शनचारित्रं ।
रक्षंति सदा मुनेः माता पुत्रमिव प्रयताः ॥ ३९ ॥

एता अष्टप्रवचनमातृकाः पंचसमितयस्त्रिगुप्तयः प्रवचनमातरो मुनेर्ज्ञानदर्शनचारित्राणि रक्षन्ति पालयन्ति । कथं ? यथा माता जननी पुत्रं बालकं तथैताः पालयन्तीति अत्र अत्रोकारस्य ह्रस्वत्वं प्राकृतबलाद् द्रष्टव्यं ॥ १३९ ॥

अष्टप्रवचनस्य शुद्धाः पंचविंशति भावनास्वरूपं प्रतिपादयन्नाह—

एसणणिक्खेवादाणिरियासमिदी तहा मणोगुत्ती।
आलोयभोयणंपि य अहिंसाए भावणा पंच ४०

एषणानिक्षेपादानेर्यासमितयः तथा मनोगुप्तिः।
आलोक्यभोजनमपि च अहिंसाया भावनाः पंच ॥१४०

अशनसमितिर्निक्षेपादानसमितिरीर्यासमितिस्तथा मनोगुप्तिरालोक्यभोजनमपि चाहिंसाव्रतस्यैता भावनाः पंच। एता भावयन् जीवदयां प्रतिपालयति। प्रथममहाव्रतं परिपूर्णं तिष्ठति। तस्य साधनत्वेन पंच भावना जानीहीति ॥ ४० ॥

द्वितीयस्य निरूपयन्नाह—

कोहभयलोहहासपइण्णा अणुवीचिभासणं चेव।
विदियस्स भावणाओ वदस्स पंचेव ता होंति ॥

क्रोधभयलोभहास्यप्रतिज्ञाः अनुवीचिभाषणं चैव।
द्वितीयस्य भवनाः व्रतस्य पंचैव ता भवंति ॥

क्रोधभयलोभहास्यानां प्रतिज्ञा प्रत्याख्यानं। क्रोधस्य प्रत्याख्यानं भयस्य प्रत्याख्यानं लोभस्य प्रत्याख्यानं हास्यस्य प्रत्याख्यानं। अनुवीचिभाषणं चैव सूत्रानुसारेण भाषणं च द्वितीयस्य सत्यव्रतस्य भावनाः पंचैव भवन्ति। पंचैता भावना भावयतः सत्यव्रतं सम्पूर्णं स्यादिति ॥ १४१ ॥

तृतीयव्रतस्य भावनास्वरूपं विवृण्वन्नाह—

जायणसमणुण्णमणा-
अणण्णभावोवि चत्तपडिसेवी ।
साधम्मिओवकरण-
स्सणुवीचीसेवणं चावि ॥ १४२ ॥

याञ्चा समनुज्ञापना अनन्यभावोपि त्यक्तप्रतिसेवी
साधर्मिकोपकरणस्यानुवीचिसेवनं चापि ॥ १४२ ॥

याञ्चा प्रार्थना समनुज्ञापना यस्य सम्बन्धि किंचिद्वस्तु तमनुमान्य ग्रहणं गृहीतस्य वा सम्बोधनं । अनन्यभावोऽदुष्टभावोऽनात्मभावः परवस्तुनः परिगृहीतस्यात्मभावो न कर्तव्यः । त्यक्तं श्रामण्ययोग्यं, अन्ये चार्थिनो न तस्य, सावद्यरहितं त्यक्तमित्युच्यते । अथवा विपक्ष आचार्य इत्युच्यते । प्रतिसेवत इति प्रतिसेवी । स प्रत्येकमभिसम्बध्यते । याञ्चया प्रतिसेवी समनुज्ञापनया प्रतिसेवी अनात्मभावप्रतिसेवी, निरवद्यस्य श्रामण्ययोग्यस्य त्यक्तस्याचार्यस्य वा प्रतिसेवी । समानो धर्मोऽनुष्ठानं यस्य सधर्मा तस्य यदुपकरणं पुस्तकपिच्छिकादि तस्यानुवीच्यागमानुसारेण सेवनं सधर्मोपकरणस्य सूत्रानुकूलतया सेवनं चापि । एताः पंच भावनास्तृतीयव्रतस्य भवन्तीति । एताभिरस्तेयाख्यं व्रतं सम्पूर्णं भवतीति ॥ १४२ ॥

चतुर्थव्रतस्य भावनास्वरूपं विवृण्वन्नाह—

महिलालोयण पुव्वरदिसरणसंसत्तवसाधिविकहाहिं
पणिदरसेहिं य विरदी य भावणा पंच बह्महि ॥
महिलालोकनं पूर्वरतस्मरणं संसक्तवसतिविकथाभ्यः
प्रणीतरसेभ्यश्च विरतिश्च भवनाः पंच ब्रह्माणि ॥

महिलानां योषितामवलोकनं दुष्टपरिणामेन निरीक्षणं महिलालोकनं । पूर्वस्य [ स्या ] रतेः गृहस्थावस्थायां चेष्टितस्य स्मरणं चिन्तनं पूर्वरतिस्मरणं । संसक्तवसतिः सद्रव्या सरागा वा । विकथा दुष्टकथाः । पणिदरस-प्रणीतरसा इष्टाहाररसमदकराः । विरतिशब्दः प्रत्येकमभिसम्बध्यते । महिलालोकनाद्विरतिः पूर्वरतिस्मरणाद्विरतिः संसक्तवसतेर्विरतिः विकथाभ्यः स्त्रीचौरराज्यभक्तकथाभ्यो विरतिः समीहितरसेभ्यो विरतिः । एताः पंच भावनाः चतुर्थस्य ब्रह्मव्रतस्य भावना भवन्ति । एताभिश्चतुर्थब्रह्मव्रतं सम्पूर्णं तिष्ठतीति ॥

पंचमव्रतभावना विकल्पयन्नाह—

अपरिग्गहस्स मुणिणो सद्दप्फरिसरसरूवगंधेसु ।
रागद्दोसादीणं परिहारो भावणा पंच ॥
अपरिग्रहस्य मुनेः शब्दस्पर्शरसरूपगंधेषु ।
रागद्वेषादीनां परिहारः भावनाः पंच ॥ १४४ ॥

अपरिग्रहस्य मुनेः शब्दस्पर्शरसरूपगन्धेषु रागद्वेषादीनां

परिहारः भावनाः पंच भवन्ति । शब्दादिविषये रागद्वेषादीनामकरणानि यानि तैः सम्पूर्णं पंचमं महाव्रत स्यादिति ॥

किमर्थमेता भावना भावयितव्या यस्मात्—

ण करेदि भावणाभाविदो हु पीलं वदाण सव्वेसिं।
साधू पासुत्तो स मणागवि किं दाणि वेदंतो ॥

न करोति भावनाभावितो हि पीडां व्रतानां सर्वेषां।
साधुः प्रसुप्तः स मनागपि किमिदानीं वेदयन् १४५

हु यस्मात् पचविंशतिभावनाभावितः साधुः प्रसुप्तोऽपि निद्रांगतोऽपि समुद्धोऽपि मूर्छागतोऽपि सर्वेषा व्रतानां मनागपिपीडां विराधनां न करोति किं पुनश्चेतयमानः। स्वप्नेऽपि ता एव भावनाः पश्यति, न व्रतविराधनाः पश्यतीति ॥१४५॥

एदाहि भावणाहिं दु तम्हा भावेहि अप्पमत्तो त्वं।
अच्छिद्दाणि अखंडाणि ते भविस्संति हु वदाणि

एताभिः भवनाभिस्तु तस्मात् भावय अप्रमत्तस्त्वं।
आच्छिद्राणि अखंडानि ते भविष्यंति खलु वृतानि ॥

तस्मादेताभिर्भावनाभिः भावयात्मानमप्रमत्तः स त्वं। ततोऽच्छिद्राण्यखण्डानि सम्पूर्णानि भविष्यन्ति हि स्फुटं ते तव व्रतानीति ॥ १४६ ॥

---

१ 'समुदहो इत्यपि पाठ ।

चारित्राचारमुपसंहरंस्तप आचारं च सूचयन्नाह—

**एसो चरणाचारो पंचविधो वण्णिदो समासेण ।**
**एत्तो य तवाचारं समासदो वण्णयिस्सामि ॥१४॥**

एष चरणाचारः पंचविधो वर्णितः समासेन ।
इतश्च तप आचारं समासतो वर्णयिष्यामि ॥१४७॥

एष चरणाचारः पंचविधोऽष्टविधश्च वर्णितो मया समासेन । इत ऊर्ध्वं तप आचारं समासतो वर्णयिष्यामीति ॥ १४७ ॥

**दुविहा य तवाचारो बाहिर अब्भंतरो मुणेयव्वो**
**एक्को विय छद्धा जधाकमं तं परूवेमो ॥१४८॥**

द्विविधश्च तप आचारः बाह्य आभ्यंतरो ज्ञातव्यः ।
एकैकोपि च षोढा यथाक्रमं तं प्ररूपयामि ॥ १४८ ॥

द्विप्रकारस्तप आचारस्तपोऽनुष्ठानं । बाह्यो बाह्यजनप्रकटः । अभ्यन्तरोऽभ्यन्तरजनप्रकटः । एकैकोऽपि च बाह्याभ्यन्तरश्चैकैकः षोढा षड्प्रकारः । यथाक्रमं क्रममनुल्लंघ्य प्ररूपयामि कथयिष्यामीति ॥ १४८ ॥

बाह्यं षड्भेदं नामोद्देशेन निरूपयन्नाह––

**अणसण अवमोदरियं**
**रसपरिचाओ य वुत्तिपरिसखा ।**

कायस्स वि परितावो
विवित्तसयणासणं छट्ठं ॥ १४९ ॥

अनशनं अवमौदर्यं रसपरित्यागश्च वृत्तिपरिसंख्या ।
कायस्य च परितापो विविक्तशयनासनं षष्ठं ॥ १४९ ॥

अनशनं चतुर्विधाहारपरित्यागः । अवमौदर्यमतृप्तिभोजनं । रसानां परित्यागो रसपरित्यागः स्वाभिलषितस्निग्धमधुराम्लकटुकादिरसपरिहारः । वृत्तेः परिसंख्या वृत्तिपरिसंख्या गृहदायकभाजनौदनकालादीनां परिसंख्यानपूर्वको ग्रहः । कायस्य शरीरस्य परितापः कर्मक्षयाय बुद्धिपूर्वकं शोषणं आतापनाभ्रावकाशवृक्षमूलादिभिः । विविक्तशयनासनं स्त्रीपशुपण्डकविवर्जितं स्थानसेवनं षष्ठमिति ॥ १४९ ॥

अनशनस्य भेदं स्वरूपं च प्रतिपादयन्नाह—

इत्तिरियं जावजीवं
दुविहं पुण अणसणं मुणेयव्वं ।
इत्तिरियं साकंखं
णिरावकंखं हवे विदियं ॥ १५० ॥

इत्तिरियं यावज्जीवं द्विविधं पुनः अनशनं ज्ञातव्यं ।
इत्तिरियं साकांक्षं निराकांक्षं भवेत् द्वितीयं ॥ १५० ॥

अनशनं पुनरित्तिरियथावज्जीवभेदाभ्यां द्विविधं ज्ञातव्यं इत्त्विरियं साकांक्षं कालादिभिः सापेक्षं एतावन्तं कालमहमशनादिकं नानुतिष्ठामीति । निराकांक्ष भवेद् द्वितीयं यावज्जीवं आ मरणान्तादपि न सेवनम् ॥ १५० ॥

साकांक्षानशनस्य स्वरूपं निरूपयन्नाह—

छट्ठट्ठमदसमदुवा–
दसेहिं मासद्धमासखमणाणि ।
कणगेगावलिआदी
तवोविहाणाणि णाहारे ॥ १५१ ॥

षष्ठाष्टदशमद्वादशैः मासार्धमासक्षमणानि ।
कनकैकावल्यादीनि तपोविधानानि अनाहारे १५१

अहोरात्रस्य मध्ये द्वे भक्तवेले तत्रैकस्यां भक्तवेलायां भोजनमेकस्याः परित्याग एकभक्तः । चतसृणां भक्तवेलानां परित्यागे चतुर्थः । षण्णां भक्तवेलानां परित्यागे षष्ठो द्विदिनपरित्यागः । अष्टानां परित्यागेऽष्टमस्त्रय उपवासाः । दशानां त्यागे दशमश्चत्वार उपवासाः । द्वादशानां परित्यागे द्वादशः पंचोपवासाः । मासार्ध-पंचदशोपवासाः पंचदशदिनान्याहारपरित्यागः । मास–मासोपवासा–स्त्रिंशदहोरात्रमात्रा अशनत्याग. । क्षमणान्युपवासाः । आवलीशब्दः प्रत्येकमभि-

सम्बध्यते । कनकावली चैकावली च कनकावल्येकावल्यौ तौ विधी आदिर्येषां तपोविधानानां कनकैकावल्यादीनि । आदि-शब्देन मुरजमध्य-विमानपंक्ति-सिंहनिष्क्रीडितादीनां ग्रहणं । कनकावल्यादीनां प्रपंचः टीकाराधनायां द्रष्टव्यो विस्तरभ-यान्नेह प्रतन्यते । अनाहारोऽनशनं षष्ठाष्टमदशमद्वादशैर्मासा-र्धमासादिमिश्र यानि क्षमणानि कनकैकावल्यादीनि च यानि तपोविधानानि तानि सर्वाण्यनाहारो यावदुत्कृष्टेन षण्मासा-स्तत्सर्वं साकांक्षमनशनमिति ॥ १५१ ॥

निराकांक्षस्यानशनस्य स्वरूपं निरूपयन्नाह—

भत्तपइण्णा इंगिणि
पाउवगमणाणि जाणि मरणाणि ।
अण्णेवि एवमादी
बोधव्वा णिरवकंखाणि ॥१५२ ॥

भक्तप्रतिज्ञा इंगिनी प्रायोपगमानि यानि मरणानि ।
अन्यान्यपि एवमादीनि बोद्धव्यानि निरवकांक्षाणि ॥

भक्तप्रत्याख्यानं द्व्याद्यष्टचत्वारिंशन्निर्यापकैः परिचर्य-माणस्यात्मपरोपकारसव्यपेक्षस्य यावज्जीवमाहारत्यागः । इङ्-गणीमरणं नामात्मोपकारसव्यपेक्षं परोपकारनिरपेक्षं । प्रायो-

१ संस्कृतहरिवंशपुराणे च द्रष्टव्यं ॥

पगमनमरणं नामात्मपरोपकारनिरपेक्षं । एतानि त्रीणि मरणानि । एवमादीन्यन्यान्यपि प्रत्याख्याता ( ना ) नि निराकांक्षाणि यानि तानि सर्वाण्यनिराकाङ्क्षमशनं बोद्धव्य ज्ञातव्यमिति ॥ १५२ ॥

अवमौदर्यस्वरूपं निरूपयन्नाह—

बत्तीसा किर कवला
पुरिसस्स दु होदि पयदि आहारो ।
एगकवलादिहिं तत्तो
ऊणियगहणं उमोदरियं ॥१५३॥

द्वात्रिंशत् किल कवलाः पुरुषस्य
तु भवति प्रकृत्या आहारः ।
एककवलादिभिस्तत
ऊनितग्रहणं अवमौदर्यम् ॥१५३॥

द्वात्रिंशत्कवलाः पुरुषस्य प्रकृत्याहारो भवति । ततो द्वात्रिंशत्कवलेभ्य एककवलेनोनं द्वाभ्यां त्रिभिः, इत्येव यावदेककवलः शेषः एकसिवथो वा । किलशब्द आगमार्थसूचकः आगमे पठितमिति । एककवलादिभिर्नित्यस्याहारस्य ग्रहणा यत् सावमौदर्यवृत्तिः । सहस्रतंदुलमानः कवल आगमे पठित' द्वात्रिंशत्कवलाः पुरुषस्य स्वाभाविक आहारस्तेभ्यो यन्न्यून

ग्रहणं तदवमोदर्यं तप इति ॥ १५३ ॥

किमर्थमवमोदर्यवृत्तिरनुष्ठीयत इति पृष्टे उत्तरमाह—

धम्मावासयजोगे णाणादीये उवग्गहं कुणदि ।
ण य इंदियप्पदोसयरी उमोदरितवोवुत्ती १५४

धर्मावश्यकयोगेषु ज्ञानादिके उपग्रहं करोति ।
न च इंद्रियप्रद्वेषकरी अवमौदर्यतपोवृत्तिः ॥ १५४ ॥

धर्मे क्षमादिलक्षणे दशप्रकारे । आवश्यकक्रियासु समतादिषु षट्सु । योगेषु वृक्षमूलादिषु । ज्ञानादिके स्वाध्याये चारित्रे चोपग्रहमुपकारं करोतीत्यवमोदर्यतपोवृत्तिः । न चेन्द्रियप्रद्वेषकरी न चावमोदर्यवृत्त्येन्द्रियाणि प्रद्वेषं गच्छन्ति किन्तु वशे तिष्ठन्तीति । बह्वाशी धर्मं नानुतिष्ठति । आवश्यकक्रियाश्च न सम्पूर्णाः पालयति । त्रिकालयोगं च न क्षेमेण समानयति । स्वाध्यायध्यानादिकं च न कर्तुं शक्नोति । तस्येन्द्रियाणि च स्वेच्छाचारीणि भवन्तीति । मिताशिनः पुनर्धर्मादयः स्वेच्छया वर्तन्त इति ॥ १५४ ॥

रसपरित्यागस्वरूपं प्रतिपादयन्नाह—

खीरदहिसप्पितेल गुडलवणाणं च जं परिच्चयणं
तित्तकटुकसायंबिलमधुररसाणं च जं चयणं ॥

क्षीरदधिसर्पिस्तैलगुडलवणानां च यत् परित्यजनं ।

तिक्तकटुकषायाम्लमधुररसानां च यत् त्यजनं १५५

अथ को रसपरित्याग इति पृष्टेऽत आह–क्षीरदधिसर्पिस्तैलगुडलवणानां घृतपूरलड्डुकादीनां च यत् परिचयणं-परित्यजनं एकैकशः सर्वेषां वा। तिक्तकटुकषायाम्लमधुररसानां च यस्त्यजनं स रसपरित्यागः। एतेषां प्रासुकानामपि तपोबुद्धया त्यजनम् ॥ १५५ ॥

याः पुनर्महाविकृतयस्ताः कथमिति प्रश्नेऽत आह—

चत्तारि महावियडी य होंति णवणीदमज्जमंसमधू
कंखापसंगदप्पासंजमकारीओ एदाओ ॥१५६॥

चतस्रो महाविकृतयश्च भवंति नवनीतमद्यमांसमधूनि
कांक्षाप्रसंगदर्पासंयमकारिण्य एताः ॥ १५६ ॥

याः पुनश्चतस्रा महाविकृतयो महापापहेतवो भवन्तीति नवनीतमद्यमांसमधूनि, कांक्षाप्रसंगदर्पासंयमकारिण्य एताः। नवनीतं कांक्षा–महाविषयाभिलाषं करोति। मद्यं–सुराप्रसंगमगम्यगमनं करोति। मांसं पिशितं दर्पं करोति। मधु असंयमं हिंसां करोति ॥ १५६ ॥

एताः किंकर्तव्या इति पृष्टेऽत आह—

आणाभिकंखि णावज्जभीरुणा तवसमाधिकामेण
ताओ जावज्जीवं णिव्वुड्ढाओ पुरा चेव १५७

आज्ञाभिकांक्षिणा अवद्यभीरुणा तपःसमाधिकामेन ।
ताः यावज्जीवं निर्व्यूढा पुरा चैव ॥ १५७ ॥

सर्वज्ञाज्ञाभिकांक्षिणा सर्वज्ञव्रतानुपालकेन । अवद्यभीरुणा पापभीरुणा, तपःकामेन तपोनुष्ठानपरेण, समाधिकामेन च ता नवनीतमद्यमांसमधूनि विकृतयो यावज्जीवं सर्वकालं निर्व्यूढाः निसृष्टाः त्यक्ताः पुरा चैव पूर्वस्मिन्नेव काले संयमग्रहणात्पूर्वमेव । आज्ञाभिकांक्षिणा नवनीतं सर्वथा त्याज्यं दुष्टकांक्षाकारित्वात् । अवद्यभीरुणा मांसं सर्वथा त्याज्यं दर्पकारित्वात् । ततः तपःकामेन मद्यं सर्वथा त्याज्यं प्रसंगकारित्वात् । समाधिकामेन मधु सर्वथा त्याज्यं, असंयमकारित्वात् । व्यस्तं समस्तं वा योज्यमिति ॥ १५७ ॥

वृत्तिपरिसंख्यानस्वरूपं प्रतिपादयन्नाह--

गोयरपमाण दायगभायणणाणाविधाण जं गहणं ।
तह एसणस्स गहणं विविधस्स य वुत्तिपरिसंखा ॥

गोचरप्रमाणं दायकभाजननानाविधानं यद्ग्रहणं ।
तथा अशनस्य ग्रहणं विविधस्य च वृत्तिपरिसंख्या १५८

गोचरस्य प्रमाणं गोचरप्रमाणं गृहप्रमाणं, एतेषु गृहेषु प्रविशामि नान्येषु बहुष्विति । दायकाः दातारः भाजनानि पारिभोग्यपात्राणि तेषां यन्नानाविधानं नानाकरणं तस्य ग्रहणं स्वीक-

रणं-दातृविशेषग्रहणं पात्रविशेषग्रहणं च । यदि वृद्धो मां विधरेत् तदानीं तिष्ठामि नान्यथा । अथवा बालो युवा स्त्री उपानत्करहितो वर्त्मनि स्थितोऽन्यथा वा विधरेत् तदानीं तिष्ठामीति । कांस्यभाजनेन रूप्यभाजनेन सुवर्णभाजनेन मृन्मयभाजनेन वा ददाति तदा गृहीष्यामीति यदेवमाद्यं । तथाशनस्य विविधस्य नानाप्रकारस्य यद्ग्रहणमवग्रहोपादानं, अद्य मकुष्ठं भोक्ष्ये नान्यत् । अथवाद्य मंडकान् सक्तून् ओदनं वा ग्रहीष्यामीति यदेवमाद्य ग्रहणं तत्सर्वं वृत्तिपरिसंख्यानमिति १५८

कायक्लेशस्वरूपं विवृण्वन्नाह—

**ठाणसयणासणेहिं य**
**विविहेहिं य उग्गयेहिं बहुएहिं ।**
**अणुवीचीपरिताओ**
**कायकिलेसो हवदि एसो ॥ १५९ ॥**

स्थानशयनासनैश्च विविधैश्चावग्रहैः बहुभिः ।
अनुवीचिपरितापः कायक्लेशः भवति एषः ॥ १५९ ॥

स्थानं-कायोत्सर्गं । शयनमेकपार्श्वमृतकदण्डादिशयनं । आसनं उत्कुटिका-पर्यंक-वीरासनमकरमुखाद्यासनं । स्थानशयनासनैर्विविधैश्चावग्रहैर्धर्मोपकारहेतुभिरभिप्रायैर्बहुभिरनुवीचीपरितापः सूत्रानुसारेण कायपरितापो वृक्षमूलाभ्रावका-

शातापनादिरेप कायक्लेशो भवति ॥ १५९ ॥

विविक्तशयनासनस्वरूपमाह—

तेरिक्खिय माणुस्सिय
सविगारियदेविगेहि संसत्ते ।
वज्जेंति अप्पमत्ता
णिलए सयणासणट्ठाणे ॥ १६० ॥

तिरश्चीमानुषीसविकारणीदेविगेहिसंसक्तान् ।
वर्जयंति अप्रमत्ता निलयान् शयनासनस्थानेषु १६०

तिर्यंचो गोमहिष्यादयः । मानुष्यः स्त्रियो वेश्याः स्वेच्छाचारिण्यादयः । सविकारिण्यो देव्यो भवनवानव्यन्तरादियोषितः । गेहिनो गृहस्थाः । एतैः ससक्तान्–सहितान्, निलयानाश्रमान् वर्जयन्ति–परिहरन्त्यप्रमत्ता यत्नपराः सन्तः शयनासनस्थानेषु कर्तव्येषु एवमनुतिष्ठतो विविक्तशयनासनं नाम तप इति ॥ १६० ॥

बाह्य तप उपसंहरन्नाह—

सो णाम बाहिरतवो जेण मणो दुक्कडं ण उट्ठेदि ।
जेण य सद्धा जायदि जेण य जोगा ण हीयंते ॥

तत् नाम बाह्यतपः येन मनः दुष्कृतं न उत्तिष्ठति ।

येन च श्रद्धा जायते येन च योगा न हीयंते॥ १६१॥

तन्नाम बाह्यं तपो येन मनोदुष्कृतं चित्तसंक्लेशो नोत्तिष्ठति नोत्पद्यते। येन च श्रद्धा शोभनानुरागो जायत उत्पद्यते येन च योगा मूलगुणा न हीयन्ते ॥ १६१ ॥

एसो दु बाहिरतवो बाहिरजणपायडो परम घोरो
अब्भंतरजणणादं वोच्छं अब्भंतरं वि तवं १६२

एतत्तु बाह्यं तपो बाह्यजनप्रकटं परमं घोरं।
अभ्यंतरजनज्ञातं वक्ष्ये अभ्यंतरमपि तपः॥ १६२ ॥

तद्बाह्यं तपः षड्विधं बाह्यजनानां मिथ्यादृष्टिजनानामपि प्रकटं प्रख्यातं परमघोरं सुष्ठु दुष्करं प्रतिपादितं। अभ्यन्तरजनज्ञातं आगमप्रविष्टजनैर्ज्ञातं वक्ष्ये कथयिष्याम्यभ्यन्तरमपि षड्विधं तपः ॥ १६२ ॥

के ते षट्प्रकारा इत्याशंकायामाह—

पायच्छित्तं विणयं वेज्जावच्चं तहेव सज्झायं।
झाणं च विउस्सग्गो अब्भंतरओ तवो एसो १६३

प्रायश्चित्तं विनयो वैयावृत्यं तथैव स्वाध्यायः।
ध्यानं च व्युत्सर्गः अभ्यंतरं तपः एतत्॥ १६३ ॥

प्रायश्चित्तं—पूर्वापराधशोधनं। विनयमनुद्धततवृत्तिः। वैया-

वृत्यं स्वशक्त्योपकारः। तथैव स्वाध्यायः सिद्धान्ताद्यध्ययनं।
ध्यानं चैकाग्रचिंतानिरोधः व्युत्सर्गः। अभ्यन्तरतप एतदिति।

प्रायश्चित्तस्वरूपं निरूपयन्नाह—

पायच्छित्तं त्ति तवो जेण विसुज्झदि हु पुव्वकयपावं
पायच्छित्तं पत्तोत्ति तेण वुत्तं दसविहं तु ॥१६४॥

प्रायश्चित्तं इति तपो येन विशुद्धयति हि पूर्वकृतपापात्।
प्रायश्चित्तं प्राप्त इति तेन उक्तं दशविधं तु॥ १६४॥

प्रायश्चित्तमपराधं प्राप्तः सन् येन तपसा पूर्वकृतात्पापात् विशुद्धयते हु—स्फुटं पूर्वव्रतैः सम्पूर्णो भवति तत्तपस्तेन कारणेन दशप्रकारं प्रायश्चित्तमिति॥ १६४॥

के ते दशप्रकारा इत्याशंकायामाह—

आलोयणपडिकमणं उभयविवेगो तहा विउस्सग्गो
तव छेदो मूलं विय परिहारो चेव सद्दहणा १६५

आलोचना प्रतिक्रमणं उभयं विवेकः तथा व्युत्सर्गः।
तपः छेदो मूलमपि च परिहारः चैव श्रद्धानं॥ १६५॥

आलोचन-आचार्याय देवाय वा चारित्राचारपूर्वकमुत्पन्नापराधनिवेदनं। प्रतिक्रमण—रात्रिभोजनत्यागव्रतसहितपंचमहाव्रतोच्चारणं संभावनं दिवसप्रतिक्रमणं पाक्षिकं वा। उभयं—आलोचनप्रतिक्रमणे। विवेकः द्विप्रकारो गणविवेकः

स्थानविवेको वा। तथा व्युत्सर्गः—कायोत्सर्गः। तपोऽनशनादिकं। छेदो-दीक्षायाः पक्षमासादिभिर्हानिः। मूलं पुनरद्य प्रभृति व्रतारोपणं। अपि च परिहारो द्विप्रकारो गणप्रतिबद्धोऽप्रतिबद्धो वा। यत्र प्रश्रवणादिकं कुर्वन्ति मुनयस्तत्र तिष्ठन्ति पिच्छिकामग्रतः कृत्वा यतीनां वन्दनां करोति तस्य यतयो न कुर्वन्ति, एवं या गणे क्रिया गणप्रतिबद्धः परिहारः। यत्र देशे धर्मो न ज्ञायते तत्र गत्वा मौनेन तपश्चरणानुष्ठानकरणमगणप्रतिबद्धः परिहारः। तथा श्रद्धानं तत्त्वरुचौ परिणामः क्रोधादिपरित्यागो वा। एतद्दशप्रकारं प्रायश्चित्तं दोषानुरूपं दातव्यमिति। कश्चिद्दोषः आलोचनमात्रेण निराक्रियते। कश्चित्प्रतिक्रमणेन कश्चिदालोचनप्रतिक्रमणाभ्यां कश्चिद्विवेकेन कश्चित्कायोत्सर्गेण कश्चित्तपसा कश्चिच्छेदेन कश्चिन्मूलेन कश्चित्परिहारेण कश्चिच्छ्रद्धानेनेति ॥ १६५ ॥

प्रायश्चित्तस्य नामानि प्राह—

पोराणकम्मखवणं खिवणं णिज्जरण सोधणं धुवणं
पुंच्छण मुछिवण छिदणं त्ति पायच्छित्तस्स णामाइं

पुराणकर्मक्षपणं क्षेपणं निर्जरणं शोधनं धावनं।
पुंच्छनं उत्क्षेपणं छेदनमिति प्रायश्चित्तस्य नामानि ॥

पुराणस्य कर्मणः क्षपणं विनाशः क्षेपणं, निर्जरणं शोधनं, धावनं, पुंच्छणं, निराकरणं, उत्क्षेपणं, छेदनं द्वैधीक-

रक्षमिति प्रायश्चित्तस्यैतान्यष्टौ नामानि ज्ञातव्यानि भवन्तीति ॥ १६६ ॥

विनयस्य स्वरूपमाह—

**दंसणणाणे विणओ चरित्ततवओवचारिओ विणओ**
**पंचविहो खलु विणओ पंचमगइणायगो भणिओ**

दर्शनज्ञाने विनयः चारित्रतप औपचारिकः विनयः।
पंचविधः खलु विनयः पंचमगतिनायको भणितः१६७

दर्शने विनयो ज्ञाने विनयश्चारित्रे विनयस्तपसि विनयः औपचारिको विनयः पंचविधः खलु विनयः पंचमीगतिनायकः प्रधानः भणितः प्रतिपादित इति ॥ १६७ ॥

दर्शनविनयं प्रतिपादयन्नाह—

**उवगूहणादिआ पुव्वुत्ता**
**तह भत्तिआदिआ य गुणा ।**
**संकादिवज्जणं पि य**
**दंसणविणओ समासेण ॥ १६८ ॥**

उपगूहनादिकाः पूर्वोक्ताः तथा भक्त्यादयश्च गुणाः
शंकादिवर्जनमपि च दर्शनविनयः समासेन ॥१६८॥

उपगूहनस्थिरीकरणवात्सल्यप्रभावनाः पूर्वोक्ताः । तथा

भक्त्यादयो गुणाः पंचपरमेष्ठिभक्त्यानुरागस्तेषामेव पूजा तेषामेव गुणानुवर्णनं, नाशनमवर्णवादस्यासादनापरिहारो भक्त्यादयो गुणाः । शंकाकांक्षाविचिकित्सान्यदृष्टिप्रशंसाना वर्जनं परिहारो दर्शनविनयः समासेनेति ॥ १६८ ॥

जे अत्थपज्जया खलु
उवदिट्ठा जिणवरेहिं सुदणाणे ।
ते तह रोचेदि णरो
दंसणविणयो हवदि एसो ॥ १६९ ॥

ये अर्थपर्यायाः खलु उपदिष्टा जिनवरैः श्रुतज्ञाने ।
तान् तथा रोचयति नरः दर्शनविनयः भवति एषः ॥

येऽर्थपर्याया जीवाजीवादयः सूक्ष्मस्थूलभेदेनोपदिष्टाः स्फुटं जिनवरैः श्रुतज्ञाने द्वादशांगेषु चतुर्दशपूर्वेषु, तान् पदार्थांस्तथैव तेन प्रकारेण याथात्म्येन रोचयति नरो भव्यजीवो येन परिणामेन स एष दर्शनविनयो ज्ञातव्य इति ॥ १६९ ॥

ज्ञानविनयं प्रतिपादयन्नाह—

काले विणए उवहाणे बहुमाणे तहेव णिण्हवणे ।
वंजणअत्थतदुभयं विणओ णाणम्हि अट्ठविहो
काले विनये उपधाने बहुमाने तथैव अनिह्नवे ।
व्यंजनार्थतदुभयं विनयो ज्ञाने अष्टविधः ॥ १७० ॥

द्वादशांगचतुर्दशपूर्वाणां कालशुद्ध्या पठनं व्याख्यानं परिवर्तनं वा। तथा हस्तपादौ प्रक्षाल्य पर्यंकेऽवस्थितस्याध्ययनं। अवग्रहविशेषेण पठनं। बहुमानं यत्पठति यस्माच्छृणोति तयोः पूजागुणस्तवनं। तथैवानिह्नवो यत्पठति यस्मात्पठति तयोः कीर्तनं। व्यञ्जनशुद्धं, अर्थशुद्धं व्यञ्जनार्थोभयशुद्धं च यत्पठनं। अनेन न्यायेनाष्टप्रकारो ज्ञाने विनय इति ॥

तथा—

णाणं सिक्खदि णाणं
गुणेदि णाणं परस्स उवदिसदि।
णाणेण कुणदि णायं
णाणविणीदो हवदि एसो १७१

ज्ञानं शिक्षते ज्ञानं गुणयति ज्ञानं परस्य उपदिशति।
ज्ञानेन करोति न्यायं ज्ञानविनीतो भवति एषः १७१

ज्ञानं शिक्षते विद्योपादानं करोति। ज्ञानं गुणयति परिवर्तनं करोति। ज्ञानं परस्मै उपदिशति प्रतिपादयति। ज्ञानेन करोति न्यायमनुष्ठानं। य एवं करोति ज्ञानविनीतो भवत्येष इति। अथ दर्शनाचारदर्शनविनययोः को भेदस्तथा ज्ञानाचारज्ञानविनययोः कश्चन भेद इत्याशंकायामाह—शंकादिपरिणामपरिहारे यत्नः उपगूहनादिपरिणामानुष्ठाने च यत्नो दर्शनविनयः। दर्शनाचारः पुनः शंकाद्यभावेन तत्त्वश्रद्धा-

नविषयो यत्न इति । तथा कालशुद्धयादिविषयेऽनुष्ठाने यत्नः कालादिविनयः, तथा द्रव्यक्षेत्रभावादिविषयश्च यत्नः। ज्ञानाचार पुनः कालशुद्धयादिषु सत्सु श्रुतं पठनयत्नं । ज्ञानविनयः श्रुतोपकरणेषु च यत्नः श्रुतविनयः । तथापनयति तपसा तमोऽज्ञानं उपनयति च मोक्षमार्गे आत्मानं तपोविनयः नियमितमतिः सोऽपि तपोविनय इति ज्ञातव्य इति ॥

चारित्रविनयस्वरूपं प्रतिपादयन्नाह—

इंदियकसायपणिहाणंपि य गुत्तीओचेवसमिदीओ
एसो चरित्तविणओ समासदो होइ णायव्वो ॥

इन्द्रियकपायप्रणिधानमपि च गुप्तयः चैव समितयः
एप चारित्रविनयः समासतो भवति ज्ञातव्यः १७२

इन्द्रियाणि चक्षुरादीनि कपायाः क्रोधादयः तेपामिन्द्रियकपायाणां प्रणिधानं प्रसरहानिरिन्द्रियकपायप्रणिधान इन्द्रियप्रसरनिवारणं कपायप्रसरनिवारणं । अथवेन्द्रियकपायाणां अपरिणामस्तद्गतव्यापारनिरोधन । अपि च गुप्तयो मनोवचनकायशुभप्रवृत्तयः । समितय ईर्याभाषैषणादाननिक्षेपोच्चारप्रस्रवणप्रतिष्ठापनाः । एप चारित्रविनयः समासतः संक्षेपतो भवति ज्ञातव्यः। अत्रापि समितिगुप्तय आचारः। तद्रक्षणोपाये यत्नश्चारित्रविनय इति ॥ १७२ ॥

तपोविनयस्वरूप प्रतिपादयन्नाह—

**उत्तरगुणउज्जोगो सम्मं अहियासणा य सद्धा य**
**आवासयाणमुचिदाण अपरिहाणीयणुस्सेहो ॥**

उत्तरगुणोद्योगः सम्यगध्यासनं च श्रद्धा च ।
आवश्यकानामुचितानां अपरिहाणिरनुत्सेधः ॥

आतापनाद्युत्तरगुणोपयोग उत्साहः । सम्यगध्यासनं तत्कृतश्रमस्य निराकुलतया सहनं । उद्गतश्रद्धा—तानुत्तरगुणान् कुर्वतः शोभनपरिणामः । आवश्यकानां समतास्तवबन्दनाप्रतिक्रमणप्रत्याख्यानकायोत्सर्गाणामुचितानां कर्मक्षयनिमित्तानां परिमितानामपरिहाणिरनुत्सेधः न हानिः कर्तव्या नापि वृद्धिः । षडेव भावाश्चत्वारः पंच वा न कर्तव्याः । तथा सप्ताष्टौ न कर्तव्याः । या यस्यावश्यकस्य वेला तस्यामेवासौ कर्तव्यो नान्यस्यां वेलायां हानिं वृद्धिं माप्नुयात् । तथा यस्यावश्यकस्य यावन्तः पठिताः कायोत्सर्गास्तावन्त एव कर्तव्या न तेषां हानिर्वृद्धिर्वा कार्या इति ॥ १७२ ॥

**भत्ती तवोधियम्हि य तवम्हि अहीलणा य सेसाणं**
**एसो तवम्हि विणओ जहुत्तचारित्तसाहुस्स ॥**

भक्तिः तपोधिके च तपसि अहेलना च शेषाणां ।
एष तपसि विनयः यथोक्तचारित्रसाधोः ॥

भक्तिः स्तुतिपरिणामः सेवा वा । तपसाधिकस्तपोऽधिकः

तस्मिंस्तपोधिके। आत्मनोऽधिकतपसि तपसि च द्वादशविध-तपोऽनुष्ठाने च भक्तिरनुरागः । शेषाणामनुत्कृष्टतपसामहेलना अपरिभवः । एष तपसि विनयः सर्वसंयतेषु प्रणामवृत्ति-र्यथोक्तचारित्रस्य साधोर्भवति ज्ञातव्य इति ॥ १७४ ॥

पंचमौपचारिकविनयं प्रपंचयन्नाह--

काइयवाइयमाणसि--
ओ त्ति अ तिविहो दु पंचमो विणओ ।
सो पुण सव्वो दुविहो
पच्चक्खो तह परोक्खो य ॥ १७५ ॥

कायिकवाचिकमानसिक
इति च त्रिविधस्तु पञ्चमो विनयः ।
स पुनः सर्वो द्विविधः
प्रत्यक्षस्तथा परोक्षश्च ॥ १७५ ॥

काये भवः कायिकः । वाचि भवो वाचिकः । मनसि भवो मानसिकः । त्रिविधस्त्रिप्रकारस्तु पंचमो विनयः । स्वर्ग-मोक्षादीन् विशेषेण नयतीति विनयः । कायाश्रयो वागाश्रयो मानसाश्रयश्चेति । स पुनः सर्वोऽपि कायिको वाचिको मान-सिकश्च द्विविधो द्विप्रकारः प्रत्यक्षश्चैव परोक्षश्च । गुरोः प्रत्यक्षश्चक्षुरादिविषयः । चक्षुरादिविषयादतिक्रान्तः परोक्ष इति ॥ १७५ ॥

कायिकविनयस्वरूपं दर्शयन्नाह—

**अब्भुट्ठाणं किदिअम्मं णवण अंजलीय मुंडाणं।**
**पच्चूगच्छणमेत्ते पछिदस्सणुसाधणं चेव ॥१७६**

अभ्युत्थानं कृतिकर्म नमनं अंजलिना मुंडानां।
प्रत्युद्गमनमायातस्य प्रस्थितस्यानुसाधनं चैव ॥

अभ्युत्थानमादरेणासनादुत्थानं । क्रियाकर्म सिद्धभक्तिश्रुतभक्तिगुरुभक्तिपूर्वकं कायोत्सर्गादिकरणं । नमनं शिरसा प्रणामः । अञ्जलिना करकुड्मलेनाञ्जलिकरणं वा मुण्डानामृषीणां । अथवा मुण्डा सामान्यवन्दना । पच्चूगच्छणमेत्ते—आगच्छतः प्रतिगमनमभिमुखयानं । प्रस्थितस्य प्रयाणके व्यवस्थितस्यानुसाधनं चानुव्रजनं च साधूनामादरः कार्यः । तथा तेषामेव क्रिया कर्म कर्तव्यं । तथा तेषामेव कृताञ्जलिपुटेन नमनं कर्तव्यं । तथा साधोरागतः प्रत्यभिमुखगमनं कर्तव्यं तथा तस्यैव प्रस्थितस्यानुव्रजनं कर्तव्यमिति ॥ तथा

**णीचं ठाणं णीचं गमणं णीच च आसणं सयणं।**
**आसणदाणं उवगरणदाण ओगासदाणं च ॥**

नीचं स्थानं नीचं गमनं नीचं च आसनं शयनं।
आसनदानं उपकरणदानं अवकाशदानं च ॥

देवगुरुभ्यः पुरतो नीचं स्थानं । नीचं च गमनं गुरो-

र्वामपार्श्वे पृष्ठतो वा गन्तव्यं। नीचं च न्यग्भूतं चासनं पीठादिवर्जनं गुरोरासनस्य पीठादिकस्य दानं निवेदनं। उपकरणस्य पुस्तिकाकुंडिकापिच्छिकादिकस्य दानमुपसंपादनं। अवकाशस्य वसतिकागिरिगुहादिकस्य प्रासुकस्यान्विष्य दानं निवेदनं। अथवा नीचं स्थानं करचरणसंकुचितवृत्तिर्गुरोः सधर्मणोऽन्यस्य वा व्याधितस्येति ॥ १७७ ॥ तथा–

पडिरूवकायसंफासणदायपडिरूपकालकिरिया य।
पेसणकरणं संथरकरणं उवकरण पडिलिहणं ॥

प्रतिरूपकायसंस्पर्शनता प्रतिरूपकालक्रिया च।
प्रेष्यकरणं संस्तरकरणं उपकरणं प्रतिलेखनं ॥

प्रतिरूप शरीरबलयोग्यं कायस्य शरीरस्य संस्पर्शनं मर्दनमभ्यगनं वा। प्रतिरूपकालक्रिया चोष्णकाले शीतक्रिया शीतकाले उष्णक्रिया वर्षाकाले तद्योग्यक्रिया। प्रेष्यकरणमादेशकरणं। संस्तरकरणं टृष्टिकादिप्रस्तरणं। उपकरणानां पुस्तिकाकुंडिकादीनां प्रतिलेखनं सम्यग्निरूपणम् ॥१७८॥

इच्चेवमादिओ जो उवयारो कीरदे सरीरेण।
एसो काइयविणओ जहारिहं साहुवग्गस्स ॥

इत्येवमादिको यः उपकारः क्रियते शरीरेण।
एषः कायिकविनयः यथार्हं साधुवर्गस्य ॥

इत्येवमादिरुपकारो गुरोरन्यस्य वा साधुवर्गस्य यः शरीरेण क्रियते यथायोग्यं स एष कायिको विनयः कायाश्रितत्वादिति ॥ १७६ ॥

वाचिकविनयस्वरूपं विवृण्वन्नाह—

**पूयावयणं हिदभासणं च मिदभासणं च मधुरं च ।**
**सुत्ताणुवीचिवयणं अणिट्ठुरमकक्कसं वयणं ॥**

पूजावचनं हितभाषणं च मितभाषणं च मधुरं च ।
सूत्रानुवीचिवचनं अनिष्ठुरमकर्कशं वचनं ॥

पूजावचनं बहुवचनोच्चारणं यूयं भट्टारका इत्येवमादि । हितस्य पथ्यस्य भाषणं इहलोकपरलोकधर्मकारणं वचनं । मितस्य परिमितस्य भाषणं चाल्पाक्षरबह्वर्थं । मधुरं च मनोहरं श्रुतिसुखदं । सूत्रानुवीचिवचनमागमदृष्ट्या भाषणं यथा पापं न भवति । अनिष्ठुरं दग्धमृतप्रलीनेत्यादिशब्दै रहितं । अकर्कशं वचनं च वर्जयित्वा वाच्यमिति ॥ १८० ॥

**उवसंतवयणमगिहत्थवयणमकिरियमहीलणं वयणं**
**एसो वाइयविणओ जहारिहं होदि कादव्वो ॥**

उपशांतवचनं अगृहस्थवचनं अक्रियमहीलनं वचनं
एष वाचिकविनयः यथार्हं भवति कर्तव्यः ॥

उपशान्तवचनं क्रोधमानादिरहितं । अगृहस्थवचनं गृह

अथौपचारिको विनय उपकारे धर्मादिकपरचित्तानुग्रहे भव औपचारिकः खलु स्फुटं त्रिविधस्त्रिप्रकारः कायिकवाचिकमानसिकभेदेन समासतः संक्षेपतो भणितः कथितः । सप्तविधश्चतुर्विधो द्विविधो बोद्धव्यः । आनुपूर्व्यानुक्रमेण कायिकः सप्तप्रकारो वाचिकश्चतुर्विधः मानसिको द्विविध इति ॥

कायिकविनयं सप्तप्रकारमाह—

अब्भुट्ठाणं सण्णदि आसणदाणं अणुप्पदाणं च
किदिकम्मं पडिरूवं आसणचाओ य अणुव्वजणं

अभ्युत्थानं सन्नतिः आसनदानं अनुप्रदानं च ।
कृतिकर्म प्रतिरूपं आसनत्यागश्च अनुव्रजनं ॥

अभ्युत्थानमादरेणोत्थानं । सन्नतिः शिरसा प्रणामः । आसनदानं पीठाद्युपनयनं । अनुप्रदानं च पुस्तकपिच्छिकाद्युपकरणदानं । क्रियाकर्म श्रुतभक्त्यादिपूर्वककायोत्सर्गः प्रतिरूपं यथायोग्यं, अथवा शरीरप्रतिरूपं कालप्रतिरूपं भावप्रतिरूपं च क्रियाकर्म शीतोष्णमूत्रपुरीषाद्यपनयनं । आसनपरित्यागो गुरोः पुरत उच्चस्थाने न स्थातव्यं । अनुव्रजनं प्रस्थितेन सह किंचिद्गमनमिति । अभ्युत्थानमेकः सन्नतिर्द्वितीय आसनदानं तृतीयम् (अ)नुप्रदानं चतुर्थः प्रतिरूपक्रियाकर्म पंचमः आसनत्यागः षष्ठोऽनुव्रजनं सप्तमः प्रकारः कायिकविनयस्येति ॥ १८५ ॥

वाचिकमानसिकविनयभेदानाह—

हिदमिदपरिमिदभासा
अणुवीचीभापणं च वोधव्वं ।
अकुसलमणस्स रोधो
कुसलमणपवत्तओ चेव ॥

हितमितपरिमितभाषा अनुवीचिभाषणं च बोद्धव्यं ।
अकुशलमनसो रोधः कुशलमनःप्रवर्तकश्चैव ॥

हितभाषणं मितभाषणं परिमितभाषणमनुवीचिभाषणं च । हितं धर्मसंयुक्तं । मितमल्पाक्षर बह्वर्थं । परिमितं कारण सहितं । अनुवीचीभाषणमागमाविरुद्धवचनं चेति चतुर्विधो वचनविनयो ज्ञातव्यः । तथाऽकुशलमनसो रोधः पापादानकारकचित्तनिरोधः । कुशलमनसो धर्मप्रवृत्तचित्तस्य प्रवर्तकश्चेति द्विविधो मनोविनय इति ॥ १८६ ॥

स एवं द्विविधो विनयः साधुवर्गेण कस्य कर्तव्य इत्याशंकायामाह—

रादिणिए ऊणरादिणिएसु अ
अज्जासु चेव गिहिवग्गे ।
विणओ जहारिओ सो
कायव्वो अप्पमत्तेण ॥

स्थानां मकारवकारादि यद्वचनं तेन रहितं बन्धनत्रासनताडनादिवचनरहितं । अकिरियं असिमसिकृष्यादिक्रिया ( दि ) रहितं अथवा सक्रियमिति पाठः । सक्रियं क्रियायुक्तमन्यच्चिन्नान्यदोषयोरिति न वाच्यं, तदुच्यते यन्निष्पाद्यते । अहीलं-अपरिभवचनं । इत्येवमादिवचनं यत्र स एष वाचिको विनयो यथायोग्यं भवति कर्तव्य इति ॥ १८१ ॥

मानसिकविनयस्वरूपमाह—

पापविसोत्तिअपरिणा-
मवज्जणं पियहिदे य परिणामो ।
णादव्वो संखेवे--
णेसो माणसिओ विणओ ॥ १८२ ॥

पापविश्रुतिपरिणामवर्जनं प्रियहिते च परिणामः ।
ज्ञातव्यः संक्षेपेणैषः मानसिको विनयः ॥ १८२ ॥

पापविश्रुतिपरिणामवर्जनं पापं हिंसादिकं विश्रुतिः सम्यग्विराधना तयोः परिणामस्तस्य वर्जनं परिहारः । प्रिये धर्मोपकारे हिते च सम्यग्ज्ञानादिके च परिणामो ज्ञातव्यः । संक्षेपेण स एष मानसिकश्चित्तोद्भवो विनय इति ॥१८२॥

इय एसो पच्चक्खो
विणओ पारोक्खिओवि जं गुरुणो ।

विरहम्मिवि वट्टिज्जदि
आणाणिद्देसचरियाए ॥

इति एषः प्रत्यक्षः विनयः पारोक्षिकोपि यत् गुरोः ।
विरहेपि वर्तते आज्ञानिर्देशचर्यायाः ॥ १८२ ॥

इत्येष प्रत्यक्षविनयः कायिकादिः, गुर्वादिषु सत्सु वर्तते यतः, पारोक्षिकोऽपि विनयो यद्गुरोर्विरहेऽपि गुर्वादिषु परोक्षीभूतेषु यद्वर्तते । आज्ञानिर्देशेन चर्यया वार्हद्भट्टारकोपदिष्टेषु जीवादिपदार्थेषु श्रद्धानं कर्तव्यं तथा तैर्या चर्योद्दिष्टा व्रतसमित्यादिका तया च वर्तनं परोक्षा विनयः । तेषां प्रत्यक्षतो यः क्रियते स प्रत्यक्षमिति ॥ १८२ ॥

पुनरपि त्रिविधं विनयमन्येन प्रकारेणाह—

अह ओपचारिओ खलु
विणओ तिविहो समासदो भणिओ ।
सत्त चउव्विह दुविहो
बोधव्वो आणुपुव्वीए ॥

अथ औपचारिकः खलु विनयः
त्रिविधः समासतो भणितः ।
सप्त चतुर्विधः द्विविधः
बोधव्यः आनुपूर्व्या ॥

रात्र्यधिके ऊनरात्र्यधिकेषु च आर्यासु चैव गृहिवर्गे।
विनयः यथार्हः स कर्तव्यः अप्रमत्तेन ॥

रादिणिए-रात्र्यधिके दीक्षागुरौ श्रुतगुरौ तपोधिके च। उणरादिणिएसु य-ऊनरात्रिकेषु च तपसा कनिष्ठेषु गुणकनिष्ठेषु वयसा कनिष्ठेषु च साधुषु। अज्जासु-आर्यिकासु। गिहिवग्गे-गृहिवर्गे श्रावकलोके च। विनयो यथारिहो यथायोग्यः कर्तव्यः। अप्रमत्तेन प्रमादरहितेन। साधूनां यो योग्यः आर्यिकाणां यो योग्यः, श्रावकाणां यो योग्यः, अन्येषामपि यो योग्यः स तथा कर्तव्यः, केन? साधुवर्गेणाप्रमत्तेनात्मतपोऽनुरूपेण प्रासुकद्रव्यादिभिः स्वशक्त्या चेति॥ १८७॥

किमर्थं विनयः क्रियते इत्याशंकायामाह—

विणएण विप्पहीणस्स
हवदि सिक्खा णिरत्थिया सव्वा।
विणओ सिक्खाए
फलं विणयफलं सव्वकल्लाणं ॥१८८॥

विनयेन विप्रहीणस्य भवति शिक्षा निरर्थिका सर्वा।
विनयः शिक्षायाः फलं विनयफलं सर्वकल्याणं ॥

विनयेन विप्रहीणस्य विनयरहितस्य भवति शिक्षा श्रुताध्ययनं निरर्थिका विफला सर्वा सकला विनयः पुनः शिक्षा

या विद्याध्ययनस्य फलं, विनयफलं सर्वकल्याणान्यभ्युदय-निःश्रेयससुखानि । अथवा स्वर्गावतरणजन्मनिष्क्रमणके-वलज्ञानोत्पत्तिपरिनिर्वाणादीनि कल्याणादीनीति ॥ १८८ ॥

विनयस्तवमाह—

विणओ मोक्खद्दारं विणयादो संजमो तवो णाणं
विणएणाराहिज्जदि आइरिओ सव्वसंघो य ॥
विनयः मोक्षद्वारं विनयात् संयमस्तपो ज्ञानं ।
विनयेनाराध्यते आचार्यश्च सर्वसंघश्च ॥

विनयो मोक्षस्य द्वारं प्रवेशकः । विनयात्संयमः । विन-याच्चपः । विनयाच्च ज्ञानं । भवतीति सम्बन्धः । विनयेन चाराध्यते आचार्यः सर्वसंघश्चापि ॥ १८९ ॥

आयारजीदकप्पगुणदीवणा अत्तसोधि णिज्झंजा
अज्जवमद्दवलाहवभत्तीपल्हादकरणं च ॥
आचारजीदकल्पगुणदीपनां आत्मशुद्धिः निर्द्वंद्वः ।
आर्जवमार्दवलाघवभक्तिप्रह्लादकरणानि च ॥

आचारस्य गुणा जीदप्रायश्चित्तस्य कल्पप्रायश्चित्तस्य गुणास्तद्व्रतानुष्ठानानि तेषां दीपनं प्रकटनं । आत्मशुद्धिरात्म-कर्मनिर्मुक्तः । निर्द्वन्द्वः कलहाद्यभावः । ऋजोर्भाव आर्जवं सरलता, मृदोर्भावो मार्दवं मायामानयोर्निरासः । लघोर्भावो

लाघवं निःसंगता लोभनिरासः । भक्तिर्गुरुसेवा । प्रल्हादकरणं च सर्वेषां सुखोत्पादनं । यो विनयं करोति तेनाचरजीदकल्पविषया ये गुणास्ते दीपिता उद्योतिता भवंति । आर्जवमार्दवलाघवभक्तिप्रल्हादकरणानि च भवंति विनयकर्तुरिति ॥

**कित्ती मित्ती माणस्स भंजणं गुरुजणे य बहुमाणं**
**तित्थयराणं आणा गुणाणुमोदो य विणयगुणा**

कीर्तिः मैत्री मानस्य भंजनं गुरुजने च बहुमानं ।
तीर्थंकराणां आज्ञा गुणानुमोदश्च विनयगुणाः ॥

कीर्तिः सर्वव्यापी प्रतापः ख्यातिश्च । मैत्री सर्वैः सह मित्रभावः । मानस्य गर्वस्य भंजनमामर्दनं । गुरुजने च बहुमानं पूजाविधानं । तीर्थंकराणामाज्ञा पालिता भवति । गुणानुमोदश्च कृतो भवति । एते विनयगुणा भवन्तीति । विनयस्य कर्ता कीर्तिं लभते । तथा मैत्रीं लभते । तथात्मनो मानं निरस्यति । गुरुजनेभ्यो बहुमानं लभते । तीर्थंकराणामाज्ञां च पालयति । गुणानुरागं च करोतीति ॥ १९१ ॥

वैयावृत्यस्वरूपं निरूपयन्नाह—

**आइरियादिसु पंचसु सबालवुड्ढाउलेसु गच्छेसु ।**
**वेज्जावच्चं वुत्तं कादव्वं सव्वसत्तीए ॥**

आचार्यादिषु पंचसु सबालवृद्धाकुलेषु गच्छेषु ।

वैयावृत्त्यं उक्तं कर्तव्यं सर्वशक्त्या ॥

आचार्योपाध्यायस्थविरप्रवर्तकगणधरेषु पंचसु । बाला नवकप्रव्रजिताः । वृद्धा वयोवृद्धास्तपोवृद्धा गुणवृद्धास्तैराकुलो गच्छस्तथैव बालवृद्धाकुले गच्छे सप्तपुरुषसन्ताने । वैयावृत्त्यमुक्तं यथोक्तं कर्तव्यं सर्वशक्त्या सर्वसामर्थ्येन उपकरणाहारभैषजपुस्तकादिभिरुपग्रहः कर्तव्य इति ॥ १९२ ॥

पुनरपि विशेषार्थं श्लोकेनाह—

गुणाधिए उवज्झाए तवस्सि सिस्से य दुव्वले ।
साहुगणे कुले संघे समणुण्णे य चापदि ॥

गुणाधिके उपाध्याये तपस्विनि शिष्ये च दुर्बले ।
साधुगणे कुले संघे समनोज्ञे च चापदि ॥

गुणैरधिको गुणाधिकस्तस्मिन् गुणाधिके । उपाध्याये श्रुतगुरौ । तपस्विनि कायक्लेशपरे । शिक्षके शास्त्रशिक्षणतत्परे दुःशीले वा दुर्बले व्याध्याक्रान्ते वा । साधुगणे ऋषियतिमुन्यनगारेषु । कुले गुरुकुले स्त्रीपुरुषसन्ताने । संघे चातुर्वर्ण्ये श्रवणसंघे । समनोज्ञे सुखासीने सर्वोपद्रवरहिते । आपदि चोपद्रवे संजाते वैयावृत्त्यं कर्तव्यमिति ॥ १९३ ॥

कैः कृत्वा वैयावृत्त्यं कर्तव्यमित्याह—

सेज्जोग्गासणिसेज्जो
तहोवहिपडिलेहणाहि उवग्गहिदे ।

आहारोसहवायण-
विकिंचणं वंदणादीहिं ॥
शय्यावकाशनिपद्या तथा
उपधिप्रातिलेखनाभिः उपग्रहः ।
आहारौपधवाचना-
विकिंचनवंदनादिभिः ॥

शय्यावकाशो वसतिरवकाशदानं निपद्याऽऽसनादिकं । उपधिः कुंण्डिकादि । प्रतिलेखन पिच्छिकादिः । इत्येतैरुपग्रह उपकारः । अथवैतैरुपगृहीते स्वीकृते । तथाहारौपधवाचनाव्याख्यानविकिंचनमूत्रपुरीषादिव्युत्सर्गवन्दनादिभिः । आहारेण भिक्षाचर्यया । औपधेन शुंठिपिप्पल्यादिकेन । शास्त्रव्याख्यानेन । च्युतमलनिर्हरणेन । वन्दनया च । शय्यावकाशेन निषद्ययोपधिना प्रतिलेखनेन च पूर्वोक्तानामुपकारः कर्तव्यः । एतैस्ते प्रतिगृहीता आत्मीकृता भवंतीति ॥

ते ( के ) षु स्थानेषूपकारः क्रियतेऽत आह—

अद्धाणतेणसावदरायणदीरोधणासिवे ओमे ।
वेज्जावच्चं वुत्तं संगहसारक्खणोवेदं ॥
अध्वस्तेनश्वापदराजनदीरोधनासिव ओमे ।
वैयावृत्त्यं उक्तं संग्रहसारक्षणोपेतम् ॥

अध्वनि श्रान्तस्य । स्तेनैश्चौरैरुपद्रुतस्य । श्वापदैः सिंहव्याघ्रादिभिः परिभूतस्य । राजभिः खंचितस्य । नदीरोधेन पीडितस्य । अशिवेन मारिरोगादिव्यथितस्य । ओमे दुर्भिक्षपीडितस्य । वैयावृत्त्ययुक्तं संग्रहसारक्षणोपेतं । तेषामागतानां संग्रहः कर्तव्यः । संगृहीतस्य रक्षणं कर्तव्यं । अथचैवं सम्बन्धः कर्तव्यः । एतेषु प्रदेशेषु संग्रहोपेतं सारक्षणोपेतं च वैयावृत्त्यं कर्तव्यमिति । अथवा रोधशब्दः प्रत्येकमभिसम्बध्यते । पथिरोधश्चौररोधः श्वापदरोधः राजरोधो नदीरोध एतेषु रोधेषु तथा अशिवे दुर्भिक्षे च वैयावृत्त्यं कर्तव्यमिति ॥ १९५ ॥

स्वाध्यायस्वरूपमाह—

परियट्टणाय वायण
पडिच्छणाणुपेहणा य धम्मकहा ।
थुदिमंगलसंयुक्तः
पंचविहो होइ सज्झाओ ॥ १९६ ॥

परिवर्तनं वाचनं पृच्छना अनुप्रेक्षा च धर्मकथा ।
स्तुतिमंगलसंयुक्तः पंचविधो भवति स्वाध्यायः ॥

परिवर्तनं पठितस्य ग्रन्थस्यानुवेदनं । वाचना शास्त्रस्य व्याख्यानं । पृच्छना शास्त्रश्रवणं । अनुप्रेक्षा द्वादशानुप्रेक्षाऽनित्यत्वादि । धर्मकथा त्रिषष्टिशलाकापुरुषचरितानि । स्तु-

तिर्मुनिदेववन्दना मंगल इत्येवं संयुक्तः पंचमकारो भवति स्वाध्यायः। परिवर्तनमेको वाचना द्वितीयः पृच्छना तृतीयोऽनुप्रेक्षा चतुर्थो धर्मकथास्तुतिमंगलानि समुदितानि पंचमः प्रकारः। एवं पंचविधः स्वाध्यायः सम्यग्युक्तोऽनुष्ठेय इति १९६

ध्यानस्वरूपं विवृण्वन्नाह—

**अट्टं च रुद्दसहियं दोण्णिवि झाणाणिअप्पसत्थाणि**
**धम्मं सुक्कं च दुवे पसत्थझाणाणि णेयाणि ॥**

आर्तं च रौद्रसहितं द्वे अपि ध्याने अप्रशस्ते।
धर्मं शुक्लं च द्वे प्रशस्तध्याने ज्ञातव्यानि ॥ १९७ ॥

आर्तध्यानं रौद्रध्यानेन सहितं। एते द्वे ध्याने अप्रशस्ते नरकतिर्यग्गतिप्रापके। धर्मध्यानं शुक्लध्यान चैते द्वे प्रशस्ते देवगतिमुक्तिगतिप्रापके। इत्येवंविधानि ज्ञातव्यानि। एकाग्रचिन्तानिरोधो ध्यानमिति ॥ १९७ ॥

आर्तध्यानस्य भेदानाह—

**अमणुण्णजोगइट्ठविओगपरीसहणिदाणकरणेसु**
**अट्टं कसायसहियं झाणं भणिदं समासेण ॥ १९८**

अमनोज्ञयोगइष्टवियोगपरीषहनिदानकरणेषु।
आर्तं कषायसहितं ध्यानं भणितं समासेन ॥ १९८ ॥

अमनोज्ञेन ज्वरशूलशत्रुरोगादिना योगः सम्पर्कः । इष्टस्य पुत्रदुहितृमातृपितृबन्धुशिष्यादिकस्य वियोगोऽभावः । परीषहाः क्षुत्तृट्शीतोष्णादयः । निदानकरणं इहलोकपरलोकभोगविषयोऽभिलाषः । इत्येतेषु प्रदेशेष्वार्तं मनःसंक्लेशः कषायसहितं ध्यानं भणितं समासेन संक्षेपतः । कदा ममानेनामनोज्ञेन वियोगो भविष्यतीत्येवं चिन्तनमार्तध्यानं प्रथमं । इष्टैः सह सर्वदा यदि मम संयोगो भवति वियोगो न कदाचिदपि स्याद्येवं चिन्तनमार्तध्यानं द्वितीयं । क्षुत्तृट्शीतोष्णादिभिरहं व्यथितः कदैतेषां ममाभावः स्यात् । कथ मयौदनादयो लभ्या येन मम क्षुधादयो न स्युः । कदा मम वेलायाः प्राप्तिः स्याद्येनाहं भुंजे पिबामि वा । हाकारं पूत्कारं जलसेकं च कुर्वतोऽपि तेन मम प्रतीकार इति चिन्तनमार्तध्यानं तृतीयमिति । इहलोके यदि मम पुत्राः स्युः परलोके यद्यहं देवो भवामि स्त्रीवस्त्रादिकं मम स्यादित्येवं चिन्तनं चतुर्थमार्तध्यानमिति ॥ १९८ ॥

रौद्रध्यानस्वरूपं प्रतिपादयन्नाह—

**तेणिक्कमोससारक्खणेसु तध चेव छव्विहारंभे ।**
**रुद्दं कसायसहिदं झाणं भणियं समासेण ॥ १९९**

स्तैन्यमृषासारक्षणेषु तथा चैव षड्विधारंभे ।
रौद्रं कषायसहितं ध्यानं भणितं समासेन ॥ १९९ ॥

स्तैन्यं परद्रव्यापहरणाभिप्रायः । मृषाऽनृते तत्परता । सारक्षणं यदि मदीयं द्रव्यं चोरयति तमहं निहन्मि, एवमायुधव्यग्रहस्तमारणाभिप्रायः । स्तैन्यमृषावादसारक्षणेषु । तथा चैव षड्विधारम्भे पृथिव्यप्तेजोवायुवनस्पतित्रसकायिकविराधने च्छेदनभेदनबन्धनवधताडनदहनेपूद्यमः रौद्रं कषायसहितं ध्यानं भणितं । समासेन संक्षेपेण । परद्रव्यहरणे तत्परता प्रथमं रौद्रं । परपीडाकरे मृषावादे यत्नः द्वितीयं रौद्रं । द्रव्यपशुपुत्रादिरक्षणविषये चौरदायादिमारणोद्यमे यत्नस्तृतीयं रौद्रं । तथा षड्विधे जीवमारणारम्भे कृताभिप्रायश्चतुर्थं रौद्रमिति ॥ १९९ ॥ ततः—

**अवहट्टु अट्टरुद्दे महाभए सुग्गदीयपच्चूहे ।**
**धम्मे वा सुक्के वा होहि समण्णागदमदीओ ॥**

**अपहृत्य आर्तरौद्रे महाभये सुगतिप्रत्यूहे ।**
**धर्मे वा शुक्ले वा भव समन्वागतमतिः ॥ २०० ॥**

यत एवंभूते आर्तरौद्रे । किंविशिष्टे, महाभये महासंसारभीतिदायिनि (नी) सुगतिप्रत्यूहे-देवगतिमोक्षगति-प्रतिकूले । अपहृत्य निराकृत्य । धर्मध्याने शुक्लध्याने वा भव सम्यग्विधानेन गतमतिः । धर्मध्याने शुक्लध्याने च सादरो सुष्ठु विशुद्धं मनो विधेहि समाहितमतिर्भव (वे) ति ॥२००॥

धर्मध्यानभेदान् प्रतिपादयन्नाह—

एयग्गेण मणं णिरुंभिऊण धम्मं चउव्विहं झाहि
आणापायविवायविचओ य संठाणविचयं च ॥
एकाग्रेण मनो निरुध्य धर्मं चतुर्विधं ध्याय ।
आज्ञापायविपाकविचयः संस्थानविचयश्च ॥ २०१ ॥

एकाग्रेण पंचेन्द्रियव्यापारपरित्यागेन कायिकवाचिक-व्यापारविरहेण च । मनो मानसव्यापारं । निरुध्यात्मवशं कृत्वा । धर्मं चतुर्विधं चतुर्भेदं । ध्याय चिन्तय । के ते चत्वारो विकल्पा इत्याशंकायामाह—आज्ञाविचयोऽपायविचयो विपाकविचयः संस्थानविचयश्चेति ॥ २०१ ॥

तत्राज्ञाविचयं विवृण्वन्नाह—

पंचत्थिकायछज्जीवणिकाये कालदव्वमण्णे य ।
आणागेज्झे भावे आणाविचयेण विचिणादि ॥
पंचास्तिकायषट्जीवनिकायान् कालद्रव्यमन्यत् च
आज्ञाग्राह्यान् भावान् आज्ञाविचयेन विचिनोति ॥

पंचास्तिकायाः जीवास्तिकायोऽजीवास्तिकायो धर्मास्तिकायोऽधर्मास्तिकायो वियदास्तिकाय इति तेषां प्रदेशबन्धोऽस्तीति कृत्वा काया इत्युच्यन्ते । षड्जीवनिकायाश्च पृथिव्यप्तेजोवायुवनस्पतित्रसाः । कालद्रव्यमन्यत् । अस्य प्रदेशबन्धाभावादस्तिकायत्वं नास्ति । एतानाज्ञाग्राह्यान् भावान् पदार्थान् ।

आज्ञाविचयेनाज्ञास्वरूपेण । विचिनोति विवेचयति ध्यायतीति यावत् । एते पदार्थाः सर्वज्ञनाथेन वीतरागेण प्रत्यक्षेण दृष्टा न कदाचिद् व्यभिचरन्तीत्यास्तिक्यबुद्ध्या तेषां पृथक्पृथग्विवेचनेनाज्ञाविचयः । यद्यप्यात्मनः प्रत्यक्षबलेन हेतुबलेन वा नस्पष्टा तथापि सर्वज्ञाज्ञानिर्देशेन गृह्णाति नान्यथावादिनो जिना यत इति ॥ २०२ ॥

अपायविचयं विवृण्वन्नाह--

कल्लाणपावगाओ
पाए विचिणादि जिणमदमुविच्च ।
विचिणादि वा अपाये
जीवाण सुहे य असुहे य ॥ २०३ ॥

कल्याणप्रापकान् उपायान् विचिनोति जिनमतमुपेत्य
विचिनोति वा अपायान् जीवानां शुभान् च अशुभान् च

कल्याणप्रापकान् पंचकल्याणानि यैः प्राप्यन्ते तान् प्राप्यान् सम्यग्दर्शनज्ञानचारित्राणि । विचिनोति ध्यायति । जिनमतमुपेत्य जैनागममाश्रित्य । विचिनोति वा ध्यायति वा । अपायान् कर्मापगमान् स्थितिखण्डानुभागखण्डानुत्कर्षापकर्षभेदान् । जीवानां सुखानि जीवप्रदेशसतर्पणानि । असुखानि दुःखानि चात्मनस्तु विचिनोति भावयतीति । एतैः कर्तव्यैर्जीवा दूरतो भवन्ति शासनात्, एतैस्तु शासनमुपढौ-

कते, एतैः परिणामैः संसारे भ्रमन्ति जीवाः, एतैश्च संसाराद्विमुञ्चन्तीति चिन्तनमपायचिन्तनं नाम द्वितीयं धर्मध्यानमिति ॥ २०३ ॥

विपाकविचयस्वरूपमाह—

एआणेयभवगयं
जीवाणं पुणपावकम्मफलं ।
उदओदीरणसंकम-
बंधं मोक्खं च विचिणादि ॥ २०४ ॥

एकानेकभवगतं जीवानां पुण्यपापकर्मफलं ।
उदयोदीरणसंक्रमबंधं मोक्षं च विचिनोति ॥ २०४ ॥

एकभवगतमनेकभवगतं च जीवानां पुण्यकर्मफलं पापकर्मफलं च विचिनोति । उदयं स्थितिक्षयेण गलनं विचिनोति ये कर्मस्कन्धा उत्कर्षापकर्षादिप्रयोगेण स्थितिक्षयं प्राप्यात्मनः फलं ददते तेषां कर्मस्कन्धानामुदय इति संज्ञा तं ध्यायति । तथा चोदीरणामपक्वपाचनं । ये कर्मस्कन्धाः सत्सु स्थित्यनुभागेषु अवस्थिताः सन्त आकृष्याकाले फलदाः क्रियन्ते तेषां कर्मस्कन्धानामुदीरणमिति संज्ञा तद्‌ ध्यायति । संक्रमणं परप्रकृतिस्वरूपेण गमनं विचिनोति । तथा बन्धं जीवकर्मप्रदेशान्योन्यसंश्लेषं ध्यायति । मोक्षं जीवकर्मप्रदेशविश्लेषमनन्तज्ञानदर्शनसुखवीर्यस्वरूपं विचिनोतीति सम्बन्धः । तथा

शुभप्रकृतीनां गुडखण्डशर्करामृतस्वरूपेणानुभागचिन्तनं । अशुभप्रकृतीनां निम्बकाञ्जीरविषहालाहलस्वरूपेणानुभागचिन्तनं । तथा घातिकर्मणा लतादार्वस्थिशिलसमानानुचिंतनं । नरकतिर्यग्मनुष्यदेवगतिप्रापककर्मफलचिन्तनं । इत्येवमादिचिन्तनं विपाकविचयधर्म्यध्यानं नामेति । ॥२०४॥

संस्थानविचयस्वरूपं विवृण्वन्नाह—

**उड्ढमहातिरियलोए विचिणादि सपज्जए ससंठाणे**
**एत्थेव अणुगदाओ अणुपेक्खाओ य विचिणादि**

ऊर्ध्वाधस्तिर्यग्लोकान्विचिनोतिसपर्यायान्ससंस्थानान्
अत्रैवानुगता अनुप्रेक्षाश्च विचिनोति ॥ २०५ ॥

ऊर्ध्वलोकं सपर्ययं सभेदं ससंस्थानं त्र्यस्रचतुरस्रवृत्तदीर्घायतमृदंगसंस्थानं पटलेन्द्रकश्रेणीबद्धप्रकीर्णकविमानभेदभिन्नं विचिनोति ध्यायति । तथाधोलोकं सपर्ययं ससंस्थानं वेत्रासनाद्याकृतिं त्र्यस्रचतुरस्रवृत्तदीर्घायतादिसंस्थानभेदभिन्नं सप्तपृथवीन्द्रकश्रेणिविश्रेणिबद्धप्रकीर्णकप्रस्तरस्वरूपेण स्थितं शीतोष्णनारकसंहितं महावेदनारूपं च विचिनोति। तथा तिर्यग्लोकं सपर्ययं सभेदं ससंस्थानं झल्लर्याकारं मेरुकुलपर्वतादि ग्रामनगरपत्तनभेदभिन्नं पूर्वविदेहापरविदेहभरतैरावतभोगभूमिद्वीपसमुद्रनदीवेदिकायतनकूटादिभेदभिन्नं दीर्घह्रस्ववृत्तायतत्र्यस्रचतुरस्रसंस्थानसहितं

विचिनोति ध्यायतीति सम्बन्धः । अत्रैवानुगता अनुप्रेक्षा द्वादशानुप्रेक्षा विचिनोति ॥ २०५ ॥

कास्ता अनुप्रेक्षा इति नापानीति दर्शयन्नाह—

अद्धुवमसरणमेग-
त्तमण्ण संसारलोगमसुचित्तं ।
आसवसंवरणिज्जर
धम्मं बोधिं च चिंतिज्जो ॥ २०६ ॥

अध्रुवमशरणमेकत्वमन्यत्वसंसारलोकमशुचित्वं ।
आस्रवसंवरनिर्जराधर्मो बोधिश्च चिंत्यः ॥ २०६ ॥

अध्रुवमनित्यता । अशरणमनाश्रयः । एकत्वमेकोऽहं । अन्यत्वं शरीरादन्योऽहं । संसारश्चतुर्गतिसंक्रमणं । लोक ऊर्ध्वाधोमध्यवेत्रासनझल्लरीमृदंगरूपश्चतुर्दशरज्ज्वायतः । अशुचित्वं । आस्रवः कर्मास्रवः । संवरो महाव्रतादिकं । निर्जरा कर्मसातनं । धर्मोऽपि दशप्रकारः क्षमादिलक्षणः । बोधिश्च सम्यक्त्वसहिता भावना एता द्वादशानुप्रेक्षाश्चिन्तय । तत् एतच्चतुर्विधं धर्मध्यानं नामेति । ॥ २०६ ॥

शुक्लध्यानस्य स्वरूपं भेदांश्च विवेचयन्नाह—

उवसंतो दु पुहुत्तं-
झायदि झाणं विदक्कवीचारं ।

खीणकसाओ झायदि
एयत्तविदक्कवीचारं ॥ २०७ ॥

उपशांतस्तु पृथक्त्वं
ध्यायति ध्यानं वितर्कवीचारं ।
क्षीणकषायो ध्यायति
एकत्ववितर्कवीचारं ॥ २०७ ॥

उपशान्तकषायस्तु पृथक्त्वं ध्यायति ध्यानं । द्रव्याण्यनेकभेदभिन्नानि त्रिभिर्योगैर्यतो ध्यायति ततः पृथक्त्वमित्युच्यते। वितर्कः श्रुतं यस्माद्वितर्केण श्रुतेन सह वर्तते यस्माच्च नवदशचतुर्दशपूर्वधरैरारभ्यते तस्मात्सवितर्कं तत् । विचारोर्थव्यंजनयोगः ( ग ) संक्रमणः । एकमर्थं त्यक्त्वार्थान्तरं ध्यायति मनसा संचिंत्य वचसा प्रवर्तते कायेन प्रवर्तते एवं परंपरेण संक्रमो योगानां द्रव्याणां व्यंजनानां च स्थूलपर्यायाणामपर्यानां सूक्ष्मपर्यायाणां वचनगोचरातीतानां संक्रमः सवीचारं ध्यानमिति। अस्य त्रिप्रकारस्य ध्यानस्योपशान्तकषायः स्वामी । तथा क्षीणकषायो ध्यायत्येकत्वंवितर्कं ( अ ) वीचारं। एकं द्रव्यमेकार्थपर्यायमेकं व्यंजनपर्यायं च योगनैकेन ध्यायति तद्ध्यानमेकत्वं, वितर्कः श्रुतं पूर्वोक्तमेव, अवीचारव्यंजनयोगसंक्रान्तिरहितं । अस्य त्रिप्रकारस्यैकत्ववितर्कवीचारभेदभिन्नस्य क्षीणकषायः स्वामी ॥ २०७ ॥

तृतीयचतुर्थशुक्लध्यानस्वरूपप्रतिपादनार्थमाह—

सुहुमकिरियं सजोगी झायदि झाणं च तदियसुक्कं तु
जं केवली अजोगी झायदि झाणं समुच्छिण्णं

सूक्ष्मक्रियं सयोगी ध्यायति ध्यानं च तृतीयशुक्लं तु
यत् केवली अयोगी ध्यायति ध्यानं समुच्छिन्नं ॥

सूक्ष्मक्रियामवितर्कमवीचारं श्रुतावष्टम्भरहितमर्थव्यञ्जनयोगसंक्रान्तिविमुक्तं सूक्ष्मकायक्रियाव्यवस्थितं तृतीयं शुक्लं सयोगी ध्यायति ध्यानमिति। यत्केवल्ययोगी ध्यायति ध्यानं तत्समुच्छिन्नमवितर्कमविचारमनिवृत्तिनिरुद्धयोगमपश्चिमं शुक्लमविचलं मणिशिखावत् । तस्य चतुर्थध्यानस्य योगी स्वामी । यद्यप्यत्र मानसो व्यापारो नास्ति तथाप्युपचारक्रिया ध्यानमित्युपचर्यते । पूर्ववृत्तिमपेक्ष्य घृतघटवत् पुंवेदवद्वेति ॥ २०८ ॥

दुविहो य विउस्सगो अब्भंतर बाहिरो मुणेयव्वो ।
अब्भंतर कोहादी बाहिर खेत्तादियं दव्वं॥२०९॥

द्विविधश्च व्युत्सर्गः आभ्यंतरो बाह्यः ज्ञातव्यः ।
अभ्यंतरः क्रोधादिः बाह्यः क्षेत्रादिकं द्रव्यं ॥

द्विविधो द्विप्रकारो व्युत्सर्गः परिग्रहपरित्यागोऽभ्यन्तर-बाहिरो ज्ञातव्यः । क्रोधादीनां व्युत्सर्गोऽभ्यन्तरः । क्षेत्रादिद्रव्यस्य त्यागो बाह्यो व्युत्सर्ग इति ॥ २०९ ॥

मिच्छत्तवेदरागा तहेव हस्सादिया य छद्दोसा ।
चत्तारि तह कसाया चोद्दस अब्भंतरा गंथा॥२१०
भिथ्यात्ववेदरागा तथैव हास्यादिकाश्च षट्दोपाः ।
चत्वारस्तथा कषायाःचतुर्दश अभ्यंतरा ग्रंथाः॥२१०॥

मिथ्यात्व । स्त्रीपुंनपुंसकवेदास्त्रयः । रागा हास्याद-यः षट् दोषा हास्यरत्यरतिशोकभयजुगुप्साः । चत्वार-स्तथा कषाया क्रोधमानमायालोभाः । एते चतुर्दशाभ्यन्त रा ग्रन्थाः । एतेषां परित्यागोऽभ्यन्तरो व्युत्सर्ग इति ॥२१०॥

व्युत्सर्गनिरूपणायाह—

खेत्तं वत्थुं धणधण्णगदं दुपदचदुप्पदगदं च ।
जाणसयणासणाणि य कुप्पे भंडेसु दस होंति ॥
क्षेत्रं वास्तु धनधान्यगतं द्विपदचतुष्पदगतं च ।
यानशयनासनानि च कुप्ये भांडेषु दश भवंति ।

क्षेत्रं सस्यादिनिष्पत्तिस्थानं । वास्तु गृहप्रासादादिक । धनगतं सुवर्णरूप्यद्रव्यादि । धान्यगतं शालियवगोधूमादिक द्विपदा दासीदासादयः । चतुष्पदगतं गोमहिष्याजादिगतं । यानं शयनमासनं । कुप्यं कार्पासादिक । भाण्डं हिंगुमरीचा-दिक । एवं बाह्यपरिग्रहा दशप्रकारस्तस्य त्यागो बाह्यो व्युत्स-र्ग इति ॥ २११ ॥

अभ्यन्तरस्य व्युत्सर्गस्य भेदप्रतिपादनार्थमाह—

बारसविधह्मि वि तवे सब्भंतरबाहिरे कुसलदिट्ठे।
णवि अत्थि णवि य होही सज्झायसमो तवोकम्मं॥

द्वादशविधेपि तपसि साभ्यंतरबाह्ये कुशलदृष्टे।
नाप्यस्ति नापि च भविष्यति स्वाध्यायसमं तपःकर्म

द्वादशविधस्यापि तपसः सब बाह्याभ्यन्तरे कुशलदृष्टे सर्वज्ञगणधरादिप्रतिपादिते नास्त्यपि नापि च भविष्यति स्वाध्यायसमानं तपःकर्म। द्वादशविधेऽपि तपसि मध्ये स्वाध्यायसमानं तपोनुष्ठानं न भवति न भविष्यति ॥ २१२ ॥

बाह्यव्युत्सर्गभेदप्रतिपादनार्थमाह—

सज्झायं कुव्वंतो पंचेंदियसंवुडो तिगुत्तो य।
हवदि य एअग्गमणो विणएण समाहिओ भिक्खू

स्वाध्यायं कुर्वन् पंचेंद्रियसंवृतः त्रिगुप्तश्च।
भवति च एकाग्रमनाः विनयेन समाहितो भिक्षुः॥

स्वाध्यायं कुर्वन् पंचेन्द्रियसंवृतः त्रिगुप्तश्चेन्द्रियव्यापाररहितो मनोवाक्कायगुप्तश्च, भवत्येकाग्रमनाः शास्त्रार्थतत्परो विनयेन समाहितो विनययुक्तो भिक्षुः साधुः। स्वाध्यायस्य माहात्म्यं दर्शितमाभ्यां गाथाभ्यामिति ॥ २१३ ॥

द्वादशविधस्यापि तपसः स्वाध्यायोऽधिक इति निरूपयन्नाह—

सिद्धिप्पासादवदंसयस्स
करणं चदुव्विहं होदि ।
दव्वे खेत्ते काले
भावे वि य आणुपुव्वीए ॥ २१४ ॥

सिद्धिप्रासादावतंसकस्य करणं चतुर्विधं भवति ।
द्रव्यं क्षेत्रं कालं भावमपि च आनुपूर्व्या ॥

तस्य द्वादशविधस्यापि तपसः किंविशिष्टस्य, सिद्धिप्रासादावतंसकस्य मोक्षगृहकर्णपूरस्य मण्डनस्याथवा सिद्धिप्रासादप्रवेशकस्य करणमनुष्ठानं चतुर्विधं भवति । द्रव्यमाहारशरीरादिकं । क्षेत्रमनूपजाङ्गलादिकं स्निग्धरूक्षवातपित्तश्लेष्मप्रकोपकं । कालः शीतोष्णवर्षादिरूपः । भावः (व) परिणामश्चित्तसंक्लेशः । द्रव्यक्षेत्रकालभावानाश्रित्य तपः कुर्यात् । यथा वातपित्तश्लेष्मविकारो न भवति । आनुपूर्व्यानुक्रमेण क्रमं त्यक्त्वा यदि तपः करोति चित्तसंक्लेशो भवति संक्लेशाच्च कर्मबन्धः स्यादिति ॥ २१४ ॥

तपोविधानक्रममाह—

अब्भंतरसोहणओ
एसो अब्भंतरो तओ भणिओ ।

**एत्तो विरियाचारं ।**
**समासओ वण्णइस्सामि ॥ २१५ ॥**

अभ्यंतरशोधनकं एतत् अभ्यंतरं तपो भाणितं।
इतो वीर्याचारं समासतः वर्णायिष्यामि ॥

अभ्यन्तरशोधनकमेतदभ्यन्तरतपो भणितं भावशोधनायैतत्तपः तथा बाह्यमप्युक्तं। इत ऊर्ध्वं वीर्याचारं वर्णयिष्यामि संक्षेपत इति ॥ २१५ ॥

तपोऽधिकारमुपसंहरन् वीर्याचारं च सूचयन्नाह—

**अणुगूहियबलविरिओ**
**परकमदि जो जहुत्तमाउत्तो ।**
**जुंजदि य जहाथाण**
**विरियाचारोत्ति णादव्वो ॥ २१६ ॥**

अनिगूहितबलवीर्यः पराक्रमते यः यथोक्तमात्मनः।
युनक्ति च यथास्थानं वीर्याचार इति ज्ञातव्यः ॥

अनुगूहितबलवीर्यं अनिगूहितमसंवृतमप्रच्छन्नं, बलमाहारौषधादिकृतसामर्थ्यं, वीर्यं वीर्यान्तरायक्षयोपशमजनितं संहननापेक्षं स्यापशरीरावयवकरचरणजंघोरुकटिस्कन्धादिघनघटितबन्धापेक्षं। अनिगूहिते बलवीर्ये येनासावनिगूहितब-

लवीर्यः । पराक्रमते चेष्टते समुत्सहते यो यथोक्तं तपश्चारित्रं त्रिविधानुमतिरहितं सप्तदशप्रकारसंयमविधानं प्राणसंयमं तथेन्द्रियसंयमं चैतद्यथोक्तं । अनिगूहितबलवीर्यो यः कुरुते युनक्ति चात्मानं यथास्थानं यथाशरीरावयवांश्चैमं यः स वीर्याचार इति ज्ञातव्यो भेदात् । अथवा तस्य वीर्याचारो ज्ञातव्यः इति ॥ २१६ ॥

त्रिविधानुमतिपरिहारो यथोक्तमित्युक्तस्तथा सप्तदशप्रकारं प्राणसंयमनमिन्द्रियसंयमनं च यथोक्तमित्युक्तं। तत्र का त्रिविधानुमतिः कश्च सप्तदशप्रकारः प्राणसंयमः को वेन्द्रियसंयम इति पृष्टे उत्तरमाह—

पडिसेवा पडिसुणणं
संवासो चेव अणुमदी तिविहा ।
उद्दिट्ठं जादि भुंजादि
भोगदि य होदि पडिसेवा ॥ २१७ ॥

प्रतिसेवा प्रतिश्रवणं संवासः चैव अनुमतिः त्रिविधा ।
उद्दिष्टं यदि भुंक्ते भोगयति च भवति प्रतिसेवा ॥

प्रतिसेवा प्रतिश्रवणं संवासश्चैवानुमतिस्त्रिविधा । अथ किं प्रतिसेवाया लक्षणं ? आह—उद्दिष्टं दात्रा पात्रमुद्दिश्य पात्राभिप्रायेणाहारादिकमुपकरणादिकं चोपनीतं तदानीतमा-

शरादिकं यदि भुंक्तेऽनुभवति । उपकरणादिकं च प्रासुकमानीतं दृष्ट्वा भोगयति सेवते यदि तदा तस्य पात्रस्य प्रतिसेवानामानुमतिभेदः स्यात् ॥ २१७ ॥ तथा—

> उद्दिट्ठं जदि विचरदि
> पुव्वं पच्छा व होदि पडिसुणणा ।
> सावज्जसंकिलिट्ठो
> ममत्तिभावो दु संवासो ॥ २१८ ॥

उद्दिष्टं यदि विचरति पूर्वं पश्चात् वा भवति प्रतिश्रवणा ।
सावद्यसंक्लिष्टो ममत्वभावस्तु संवासः ॥ २१८ ॥

पूर्वमेवोपदिष्टं यावत्तद्वस्तु न गृह्णाति साधुस्तावदेव पूर्वं प्रतिपादयति दाता, भवतो निमित्तं मया संस्कृतमाहारादिकं प्रासुकमुपकरणं वा तद्भवान् गृह्णातु । एवं पूर्वमेव श्रुत्वा यदि विचरति गृह्णाति । अथवा दत्त्वाहारादिकमुपकरणं पश्चान्निवेदयति युष्मन्निमित्तं मया संस्कृतं तद्भवद्भिर्गृहीतं अद्य मे संतोषः संजातः इति श्रुत्वा तूष्णींभावेन सन्तोषेण वा तिष्ठति तदा तस्य प्रतिश्रवणानामानुमतिभेदो द्वितीयः स्यादिति । तथा सावद्यसंक्लिष्टो योऽयं ममत्वभावः स संवासः । गृहस्थैः सह संवसति ममेदमिति भावं च करोत्याहारोपकरणनिमित्तं सर्वदा संक्लिष्टः मन् संवासनामानुमतिभेदस्तृतीयः । एवंप्रकारामनुमतिं कुर्वता यथोक्तं नाचरितं

बलवीर्यं चावगूहितं तेन वीर्याचारो नानुष्ठितः स्यात्तस्मात् सानुमतिस्त्रिप्रकाराऽपि त्याज्या वीर्याचारमनुष्ठनेति ॥ २१८ ॥

सप्तदशप्रकारसंयमं प्रतिपादयन्नाह—

**पुढविदगतेउवाऊवणप्फदीसंजमो य बोधव्वो।**
**विगतिगचदुपंचेंदिय अजीवकायेसु संजमणं ॥**

पृथिव्युदकतेजोवायुवनस्पतिसंयमश्च बोद्धव्यः।
द्वित्रिचतुःपंचेंद्रियाजीवकायेषु संयमनं ॥

पृथव्युदकतेजोवायुवनस्पतिकायिकानां संयमनं रक्षणं संयमो ज्ञातव्यः। तथा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियपंचेन्द्रियाणां संयमनं रक्षणं संयमः। अजीवकायानां शुष्कतृणादीनामच्छेदनं। कायभेदेन पंचप्रकारः संयमस्त्रसभेदेन चतुर्विधोऽजीवरक्षणेन चैकविधः इति दशप्रकारः संयमः ॥ २१९ ॥ तथा

**अप्पडिलेहं दुप्पडिलेहमुवेखुअवहट्टु संजमो चेव**
**मणवयणकायसंजम सत्तरसविधो दु णादव्वो ॥**

अप्रतिलेखं दुष्प्रतिलेखं उपेक्षा अपहरणस्तु संयमश्चैव
मनोवचनकायसंयमः सप्तदशविधस्तु ज्ञातव्यः ॥

अप्रतिलेखश्चक्षुषा पिच्छिकया वा द्रव्यस्य द्रव्यस्थानस्याप्रतिलेखनमदर्शनं तस्य संयमनं दर्शनं प्रतिलेखनं वा प्रतिलेखसंयमः। दुःप्रतिलेखो दुष्टुप्रमार्जनं जीवघातमर्दना-

दिकारकं तस्य संयमनं यत्नेन प्रतिलेखनं जीवप्रमादमंत-
रेण दुष्प्रतिलेखसंयमः । उपेक्षोपेक्षणं–उपकरणादिकं व्यव-
स्थाप्य पुनः कालान्तरेणाप्यदर्शनं जीवसम्मूर्छनादिकं दृष्ट्वा
उपेक्षणं तस्या उपेक्षायाः संयमनं दिनं प्रति निरीक्षणमुपेक्षा-
संयमः । अवहट्टु–अपहरणमपनयनं पंचेन्द्रियद्वीन्द्रियादीनाम-
पनयनमुपकरणेभ्योऽन्यत्र संक्षेपणमुपवर्तनं तस्य संयम ( मः )
निराकरणं उदककुम्भादिकस्य वा निराकरणमपहृत्यं
संयमः । एवं चतुर्विधः संयमः । तथा मनसः संयमनं वचन-
स्य संयमनं कायस्य संयमनं मनोवचनकायसंयमस्त्रिप्रकारः ।
एवं पूर्वान् दशभेदानिमांश्च सप्तभेदान् गृहीत्वा सप्तप्रकारः
संयमः प्राणसंयमः । अस्य रक्षणेन यथोक्तमाचरितं भवति ॥

तथेन्द्रियसंयमं प्रतिपादयन्नाह—

पंचरस पंचवण्ण
दो गंधे अट्ठ फास सत्त सरा ।
मणसा चोद्दसजीवा
इन्दियपाणा य संजमो णेओ ॥

पंचरसाः पंचवर्णा द्वौ गंधौ अष्ट स्पर्शाः सप्त स्वराः ।
मानसः चतुर्दश जीवाः इन्द्रियप्राणाश्च संयमः ज्ञेयः

पंच रसास्तिक्तकषायाम्लकटुकमधुरा रसनेन्द्रियविष-
याः । पंचवर्णाः कृष्णनीलरक्तपीतशुक्लाश्चक्षुरिन्द्रियविषयाः ।

द्वौ गंधौ सुगंधदुर्गंधौ घ्राणेंद्रियविषयौ । अष्टौ स्पर्शाः स्निग्धरूक्षकर्कशमृदुशीतोष्णलघुगुरुकाः स्पर्शनेन्द्रियविषयाः । सप्तस्वराः षड्जर्षभगान्धारमध्यमपंचमधैवतनिषादाः श्रोत्रेन्द्रियविषयाः । एतेषां मन ( सा ) सहाष्टाविंशतिभेदभिन्नानां संयमनमात्मविषयनिरोधनं संयमः । मनसो नोइंद्रियस्य संयमः । तथा चतुर्दशजीवसमासानां रक्षणं प्राणसंयमः । एवमिन्द्रियसंयमः प्राणसंयमश्च ज्ञातव्यो यथोक्तमनुष्ठेय इति २२१

पंचाचारमुपसंहरन्नाह—

दंसणणाणचरित्ते
तव विरियाचाराणिग्गहसमत्थो ।
अत्ताणं जो समणो
गच्छदि सिद्धिं धुदकिलेसो ॥

दर्शनज्ञानचारित्रतपो वीर्याचारनिग्रहसमर्थः ।
आत्मानं यः श्रमणो गच्छति सिद्धिं धुतक्लेशः ॥

एवं दर्शनज्ञानचारित्रतपोवीर्याचारैरात्मानं निग्रहयितुं नियंत्रितु यः समर्थः श्रमणः साधुः स गच्छति सिद्धिं धुतक्लेशो विधूताष्टकर्मा । एवं पंचाचारो व्याख्यातः ॥२२२॥

इति वसुनन्दिविरचितायामाचारवृत्तौ पंचाचारविवर्णनं नाम पचमः प्रस्तावः समाप्तः ॥ ५ ॥

# पिण्डशुद्धि–अधिकारः ॥ ६ ॥



पिण्डशुद्ध्याख्यं षष्ठमाचारं विवरीतुकामस्तावन्नमस्कारमाह—

> तिरदणपुरुगुणसहिदे
> अरहंते विदिदसयलसब्भावे ।
> पणमिय सिरिसा वोच्छं
> समासदो पिण्डसुद्धी दु ॥१॥

त्रिरत्नपुरुगुणसहितान् अर्हतः विदितसकलसद्भावान्
प्रणम्य शिरसा वक्ष्ये समासतः पिण्डशुद्धिस्तु ॥ १ ॥

त्रिरत्नानि सम्यग्दर्शनज्ञानचारित्राणि तानि च तानि पुरुगुणाश्च ते महागुणाश्च ते त्रिरत्नपुरुगुणाः । अथवा त्रिरत्नानि सम्यक्त्वादीनि पुरुगुणा अनन्तसुखादयस्तैः सहितास्तान् । अर्हतो अर्हतः सर्वज्ञान् विदितसकलसद्भावान् विदितो विज्ञातः सकलः समस्तः सद्भावः स्वरूपं यैस्ते तान् परिज्ञातसर्वपदार्थस्वरूपान् प्रणम्य शिरसा, वक्ष्ये समासतः पिण्डशुद्धिमाहारशुद्धिमिति । ॥ १ ॥

यथाप्रतिज्ञं निर्वहन्नाह—

उग्गम उप्पादण एसणं च संजोजणं पमाणं च ।

इंगाल धूम कारण अट्ठविहा पिण्डसुद्धी दु ॥२॥

उद्गमः उत्पादनं एषणं च संयोजनं प्रमाणं च ।
अंगारं धूमः कारणं अष्टविधा पिण्डशुद्धिस्तु ॥ २ ॥

उद्गच्छत्युत्पद्यते यैरभिप्रायैर्दातृपात्रगतैराहारादिस्ते उद्गमोत्पादनदोषाः आहारार्थानुष्ठानविशेषाः । अश्यते भुज्यते येभ्यः परिवेषकेभ्यस्तेषामशुद्धयोऽशनदोषाः । संयोज्यते संयोजनमात्रं वा संयोजनदोषः । प्रमाणातिरेकः प्रमाणदोषः । अङ्गारमिवाङ्गारदोषः । धूम इव धूमदोषः । कारणनिमित्तं कारणदोषः । एवं एतैरष्टभिर्दोषै रहिताष्टप्रकारः पिण्डशुद्धिरिति संग्रहसूत्रमेतत् ॥ २ ॥

उद्गमदोषाणां नामनिर्देशायाह—

आधाकम्मुद्देसिय
अज्झोवज्झेय पूदिमिस्से य ।
ठविदे बलि पाहुडिदं
पादुकारे य कीदे य ॥ ३ ॥

अधःकर्म औद्देशिक अध्याधि पूतिमिश्रश्च ।
स्थापितं बलिः प्रावर्तितं प्राविष्करणं च क्रीतं च ॥ ३

गृहस्थाश्रितं पंचशूनासमेतं तावत्सामान्यभूतमष्टविधा

( ष ) पिण्डशुद्धिं व हुं महादोषरूपमधःकर्म कथ्यते। आधा कम्म—अधःकर्म निकृष्टव्यापारः षड्जीवनिकायवधकरः। उद्दिश्यते इत्युद्देशः उद्देशे भव औद्देशिकः। अज्झोवज्झेय अध्यधिसंयतं दृष्ट्वा पाकारम्भः। पूदि—पूतिरप्रासुकमासुक मिश्रणं सहेतुकं। मिस्सेय-मिश्रअसंयतमिश्रणं। ठविदे--स्थापितं स्वगृहेऽन्यगृहे वा। वलि निवेद्य देवार्चना वा। पाहुडियं--प्रावर्तितं कालस्य हानिवृद्धिरूप। पादुक्कारेय-प्राविष्करणं मण्डपादेः प्रकाशनं। कीदेय--क्रीतं वाणिज्यरूपमिति। तथा--

पामिच्छे पारियट्टे
अभिहडमुब्भिण्ण मालआरोहे।
आच्छिज्जे आणिसट्टे
उग्गमदोसा दु सोलसिमे ॥ ४ ॥

प्रामृष्यं परिवर्तकं अभिघटं उद्भिन्नं मालारोहं।
अच्छेद्यं अनिसृष्ट उद्गमदोषास्तु षोडश इमे ॥ ४ ॥

पामिच्छे प्रामृष्यं सूक्ष्मर्णमृद्धारकं। परियट्टे-परिवर्तकं दत्वा ग्रहणं। अभिहड-अभिघटो देशान्तरादागतः। उब्भिण्णं—उद्भिन्न बन्धनापनयनं। मालारोहे—मालारोहणं गृहोर्ध्वमाक्रमणं। अच्छिज्जे-अच्छेद्य त्रासहेतुः। अणिसट्टे—अनीशार्थेऽ-प्रधानदाता। उद्गमदोषाः षोडशेमे ज्ञातव्याः।

गृहस्थाश्रितस्याधःकर्मणः स्वरूपं निरूपयन्नाह—

छज्जीवणिकायाणं
विराहणोद्दावणादिणिप्पण्णं ।
आधाकम्मं णेयं
सयपरकदमादसंपण्णं ॥ ५ ॥

षट्जीवनिकायानां विराधनोद्दावनादिनिष्पन्नं ।
अधःकर्म ज्ञेयं स्वपरकृत्यमात्मसम्पन्नं ॥ ५ ॥

षड्जीवनिकायानां पृथिवीकायिकाप्कायिकतेजोवायुवनस्पतित्रसकायिकानां विराधनं दुःखोत्पादनं। उद्द्रावणं उद्द्रवणं मारणं। विराधनोद्द्रावणाभ्यां निष्पन्नं सञ्जातं विराधनोद्द्रावणनिष्पन्नं यदाहारादिकं वस्तु तदधःकर्म ज्ञातव्यं। स्वकृतं परकृतानुमतं कारितमात्मनः संप्राप्तः। आत्मनः समुपस्थितं। विराधनोद्द्रावणे अधःकर्मणी पापक्रिये ताभ्यां यन्निष्पन्नं तदप्यधःकर्मेत्युच्यते। कार्ये कारणोपचारात्। स्वेनात्मना कृतं परेण कारितं वा परेण वा कृतं, आत्मनानुमतं। विराधनोद्द्रावणनिष्पन्नमात्मने संप्राप्तं यद्वैयावृत्यादिविरहितं तदधःकर्म दूरतः संयतेन परिहरणीयं गार्हस्थ्यमेतत्। वैयावृत्यादिविमुक्तमात्मभोजननिमित्तं पचनं षड्जीवनिकायवधकरं न कर्तव्यं न कारयितव्यमिति। एतत् षट्चत्वारिंशद्दोषबहिर्भूतं सर्वप्राणिसामान्यजातं गृह-

स्यानुष्ठेयं सर्वथा पर्जनीयं। यद्येतत् कुर्यात् श्रमणो गृहस्थः स्यात्। विमर्शमेतदुच्यत इति चेन्नैष दोषः. अन्येषु पाखण्डिष्वध्यासकर्मणो दर्शन यथा तेषां तदनुष्ठेयं तथा साधूनां तदनुष्ठानमयोग्य। तेन गृहस्थाः। साधवः पुनरनागारनिसंगा यतो अतो नानुष्ठेयमधः कर्मेति ज्ञापनार्थमेतदिति ॥५॥

उद्गमदोषाणां स्वरूपं प्रतिपादयन् विस्तरसूत्रमाह—

देवदपासंडट्ठं
किविणट्ठं चावि जं तु उद्दिसियं।
कदमण्णमसुद्दमं
चदुव्विहं वा समासेण ॥ ६ ॥

दैवतापाखंडार्थं कृपणार्थं चापि यत्तु औद्देशिकं।
कृतमन्नं समुद्देशं चतुर्विधं वा समासेन ॥ ६ ॥

अधःकर्मणः पार्श्वात् उ ( औ ) देशिकं सूक्ष्मदोषमपि परिहर्तुकामः प्राह-देवता नागयक्षादयः, पाषण्डा जैनदर्शनबहिर्भूतानुष्ठाना लिंगिनः कृपणा दीनजनाः। देवतार्थं पाखंडार्थं कृपणार्थं चोद्दिश्य यत्कृतमन्नं तन्निमित्तं निष्पन्नं भोजनं तदौद्देशिकं अथवा चतुर्विधं सम्यगौद्देशिकं समासेन जानीहि वक्ष्यमाणेन न्यायेन ॥ ६ ॥

तमेव चतुर्विधं प्रतिपादयन्नाह—

जावदियं उद्देसो
पासंडोत्ति य हवे समुद्देसो ।
समणोत्ति य आदेसो
णिग्गंथोत्ति य हवे समादेसो ॥ ७ ॥

यावान् उद्देशः पाषंड इति च भवेत् समुद्देशः ।
श्रमण इति च आदेशो निर्ग्रंथ इति च भवेत् समादेशः ॥

यावान् कश्चिदागच्छति तस्मै सर्वस्मै दास्यामीत्युद्दिश्य यत्कृतमन्नं स यावानुद्देश इत्युच्यते । ये केचन पाखण्डिन आगच्छन्ति भोजनाय तेभ्यः सर्वेभ्यो दास्यामीत्युद्दिश्य कृतमन्नं स पाखण्डिन इति च भवेत्समुद्देशः । ये केचन श्रमणा आजीवकतापसरक्तपटपरिव्राजकाश्छात्रा वागच्छन्ति भोजनाय तेभ्यः सर्वेभ्योऽहमाहारं दास्यामीत्युद्दिश्य कृतमन्नं स श्रमण इति कृत्वादेशो भवेत् । ये केचन निर्ग्रन्थाः साधव आगच्छन्ति तेभ्यः सर्वेभ्यो दास्यामीत्युद्दिश्य कृतमन्नं निर्ग्रन्था इति च भवेत्समादेशः । सामान्यमुद्दिश्य पाषण्डानुद्दिश्य श्रमणानुद्दिश्य निर्ग्रन्थानुद्दिश्य यत्कृतमन्नं तच्चतुर्विधमौद्देशिकं भवेदन्नमिति । उद्देशेन निर्वर्तितमौद्देशिकमिति ॥

अध्यधिदोषस्वरूपं प्रतिपादयन्नाह—

जलतंदुलपक्खेवो

दाणट्ठं संजदाण सयपयणे ।
अज्झोवज्झं णेयं
अहवा पागं तु जाव रोहो वा ॥ ८ ॥

जलतंदुलप्रक्षेपो दानार्थं संयतानां स्वपचने ।
अध्यधि ज्ञेयं अथवा पाकं तु यावत् रोधो वा ॥ ८ ॥

जलतंदुलानां प्रक्षेपः दानार्थं, संयतं दृष्ट्वा स्वकीयपचने संयतानां दानार्थं स्वस्य निमित्तं यज्जलं पिठरे निक्षिप्तं तंदुलाश्च स्वस्य निमित्तं ये स्थापितास्तस्मिन् जलेऽन्यस्य जलप्रक्षेपः तेषु च तंदुलेष्वन्येषां तंदुलानां प्रक्षेपणं यदेवंविधं तदध्यधि दोषरूपं ज्ञेयं । अथवा पाको यावता कालेन निष्पद्यते तस्य कालस्य रोधस्तावन्तं कालमासीन उदीक्षते एतदप्यधि दोषजातमिति ॥ ८ ॥

पूतिदोषस्वरूपं निगदन्नाह—

अप्पासुएण मिस्सं
पासुयदव्वं तु पूदिकम्मं तं ।
चुल्ली उक्खलि दव्वी
भायणगंधत्ति पंचविहं ॥ ९ ॥

अप्रासुकेन मिश्रं प्रासुकद्रव्यं तु पूतिकर्म तत् ।

निहितं स्थापितं यत् स्थापितमिति दोषं जानीहि । सभयेन दात्रा दीयमानत्वाद्विरं.धादिदोषदर्शनाद्वेति ॥ ११ ॥

बलिदोषस्वरूप निरूपयन्नाह—

जक्खयणागादीणं
बलिसेसं स बलित्ति पण्णत्तं ।
संजदआगमणट्ठं
बलियम्मं वा बलिं जाणे ॥ १२ ॥

यक्षनागादीनां बलिशेषः स बलिरिति प्रज्ञप्तः ।
संयतागमनार्थं बलिकर्म वा बलिं जानीहि ॥ १२॥

यक्षनागादीनां निमित्तं यो बलिस्तस्य बलि (लेः) शेषः स बलिशेषो बलिरिति प्रज्ञप्तः । सर्वत्र कारणे कार्योपचारात् । संयतानामागमनार्थं वा बलिकर्म तं बलिं विजानीहि । संयत न् धृत्वार्चनादिकमुदकक्षेपणं पत्रकादिखण्डनं यत् तस्मा दत्रबलिदोषश्च यस्तं बलिदोषं विजानीहि सावद्यदोषदर्शनादिति ॥ १२॥

प्राभृतदोषस्वरूपं निरूपयन्नाह—

पाहुडिहं पुण दुविहं
बादर सुहुमं च दुविहमेक्केक्कं ।

ओकस्सणमुक्कस्सण-
महकालोवट्टणावड्ढी ॥ १३ ॥
प्राभृतकं पुनर्द्विविधं बादरसूक्ष्मं च द्विविधमेकैकं ।
अपकर्षणमुत्कर्षणमथ कालापवर्तनवृद्धी ॥ १३ ॥

पाहुडियं-प्राभृतं । पुण-पुनः । दुविहं-द्विविधं । बादरं-स्थूलं । सुहुमं-सूक्ष्मं । पुनरप्येकैकं द्विविधं । ओकस्सणं अपकर्षणं । उक्कस्सण-उत्कर्षणं । अथवा कालस्य हानिर्वृद्धिर्वा । अपकर्षणं कालहानिः । उत्कर्षणं कालवृद्धिरिति । स्थूलं प्राभृतं कालहानिवृद्धिभ्यां द्विप्रकारं सूक्ष्मप्राभृतं तदपि द्विप्रकारं कालवृद्धिहानिभ्यामिति । ॥ १३ ॥

बादरं च द्विविधं सूक्ष्मं च द्विविधं निरूपयन्नाह-

दिवसे पक्खे मासे वास परत्तीय बादरं दुविहं ।
पुव्वपरमज्झवेलं परियत्तं दुविह सुहुमं च ॥१४॥
दिवसं पक्षं मासं वर्षं परावृत्य बादरं द्विविधं ।
पूर्वापरमध्यवेलं परिवर्तितं द्विविधं सूक्ष्मं च ॥ १४ ॥

परावृत्यशब्दः प्रत्येकमभिसम्बध्यते, दिवसं परावर्त्य, पक्षं परावृत्य, मासं परावृत्य, वर्षं परावृत्य यद्दानं दीयते तद्बादरं प्राभृतं द्विविधं भवति । शुक्लाष्टम्यां दास्यामीति स्थितं तदपकृष्य शुक्लपंचम्यां यद्दीयते शुक्लपंचम्यां वा दास्यामीति स्थि-

चुल्ली उदूखलः दर्वी भाजनं गंध इति पञ्चविधं॥१॥

प्रासुकमप्यप्रासुकेन सचित्तादिना मिश्रं यदाहारादिकं स पूतिदोषः । प्रासुकद्रव्यं तु पूतिकर्म यत्तदपि पूतिकर्म, पंचप्रकारं चुल्ली रन्धनी । उक्खलि उदूखलः । दव्वी-दर्वी । भायण-भाजनं । गन्धत्ति-गन्ध इति । अनेन प्रकारेण रन्धन्युदूखलदर्वीभाजनगन्धभेदेन पंचविधं । रन्धन्यां कृत्वैव महानस्यां रन्धन्यामोदनादिकं निष्पाद्य साधुभ्यस्तावद्दास्यामि पश्चादन्येभ्य इति प्रासुकमपि द्रव्यं पूतिकर्मणा निष्पन्नमिति पूतीत्युच्यते । तथोदूखलं कृत्वैवमस्मिन्नुदूखले चूर्णयित्वा यावदृषिभ्यो न दास्यामि तावदात्मनोऽन्येभ्यश्च न ददामीति निष्पन्नं प्रासुकमपि तत् तथाऽनया दर्व्या यावदृषिभ्यो न दास्यामि तावदात्मनोऽन्येषां न ग्रहयोग्यमेतदपि पूति । तथा भाजनमप्येतद्यावदृषिभ्यो न ददामि तावदात्मनोऽन्येषां च न ग्रहयोग्यमिति पूति । तथायं गन्धो यावदृषिभ्यो न दीयते भोजनपूर्वकस्तावदात्मनोऽन्येषां च न कल्पते इत्येवं हेतुना निष्पन्नमोदनादिकं पूतिकर्म । तत्पंचप्रकारं दोषजातं प्रथमप्रारम्भकरणादिति ॥ ९ ॥

मिश्रदोषस्वरूपं निरूपयन्नाह—

पासंडेहि य सद्धं
सागारेहिं य जदण्णमुद्दिसियं ।

दादुमिदि संजदाणं
सिद्धं मिस्सं वियाणाहि ॥ १० ॥

पाखण्डैः सार्धं सागारैश्च यदन्नं उद्दिष्टं ।
दातुमिति संयतानां सिद्धं मिश्रं विजानीहि ॥ १० ॥

प्रासुकं सिद्धं निष्पन्नमपि यदन्नमोदनादिकं पाषण्डैः सार्धं सागारैः सह गृहस्थैश्च सह संयतेभ्यो दातुमुद्दिष्टं तं मिश्रदोषं विजानीहि । स्पर्शनादिनानादरादिदोषदर्शनादिति ॥ १० ॥

स्थापितदोषस्वरूपमाह—

पागादु भायणाओ
अण्णह्मि य भायणह्मि पक्खविय ।
सघरे व परघरे वा
णिहिदं ठविदं वियाणाहि ॥ ११ ॥

पाकात् भाजनात् अन्यस्मिन् च भाजने प्रक्षिप्य ।
स्वगृहे वा परगृहे वा निहितं स्थापितं विजानीहि ११

पाकाद्भाजनात् पाकनिमित्तं यद्भाजनं तस्मिन् भाजने च यो व्यवस्थितस्तस्माद्भाजनात् पिठरादोदनादिकमन्यस्मिन् भाजने पात्र्यादौ प्रक्षिप्य व्यवस्थाप्य स्वगृहे परगृहे वा नीत्वा

तं उत्कृष्टा ( उत्कर्ष्या ) दृष्ट्वा दादात्येतद्दिवसं परावृत्य जातं प्राभृतं तथा चैत्रशुक्लपक्षे देयं यच्चैत्रांधकारपक्षे ददाति । अन्धकारपक्षे वा देयं शुक्लपक्षे ददाति पक्षपरावृत्तिजातं प्राभृतं । तथा चैत्रमासे देयं फाल्गुने ददाति फाल्गुने देयं वा चैत्रे ददाति तन्मासपरिवृत्तिजातं प्राभृतं । तथा परुत्तने वर्षे देयं यत्तदधुनातने वर्षे ददाति । अधुनातने वर्षे यदिष्टं परुत्तने ददाति तद्वर्षपरावृत्तिजातं प्राभृत । तथा सूक्ष्म च प्रावर्तितं द्विविधं पूर्वाह्णवेलायामपराह्णवेलायां मध्यवेलायामिति । अपराह्णवेलायां दातव्यमिति स्थितं प्रकरणं मंगलं संयतागमनादिकारणेनापकृष्य पूर्वाह्णवेलायां ददाति तथा मध्याह्ने दातव्यमिति स्थितं पूर्वाह्ने ऽपराह्ने वा ददाति एवं प्रावर्तितदोषं कालहानिवृद्धिकरिकरणा बादरसूक्ष्मभेदभिन्नं जानीहि क्लेशबहुविघातारंभदोषदर्शनादिति ॥ १४ ॥

प्रादुष्कारदोषमाह—

पादुक्कारो दुविहो
संकमण पयासणा य बोधव्वो ।
भायणभोयणदीणं
मंडवविरलादियं कमसो ॥ १५ ॥

प्रादुष्कारो द्विविधः संक्रमणं प्रकाशनं च बोधव्यं ।
भाजनभोजनादीनां मंडपविरलनादिकं क्रमशः ॥

प्रादुष्कारो द्विविधो बोधव्यो ज्ञातव्यः । भाजनभोजनादीनां संक्रमणमेकः । तथा भाजनभोजनादीनां प्रकाशनं द्वितीयः । संक्रमणमन्यस्मात्प्रदेशादन्यत्र नयनं प्रकाशनं भाजनादीनां भस्मादिनोदकादिना वा निर्मार्जनं भाजनादेर्वा विस्तरणमिति । अथवा मण्डपस्य विरलनमुद्योतनं मण्डपादिविरलनं । आदिशब्देन कुड्यादिकस्य ज्वलनं प्रदीपद्योतनमिति संक्षेपः सर्वः प्रादुष्कारो दोषोऽयं । ईर्यापथदोषदर्शनादिति ॥ १५ ॥

क्रीततरदोषमाह —

कीदयडं पुण दुविहं
दव्वं भावं च सगपरं दुविहं ।
सच्चित्तादी दव्वं
विज्जामंतादि भावं च ॥१६॥

क्रीततरं पुनः द्विविधं द्रव्यं भावश्च स्वपरं द्विविधं ।
सचित्तादि द्रव्यं विद्यामंत्रादि भावश्च ॥ १६ ॥

क्रीततरं पुनर्द्विविधं द्रव्यं भावश्च । द्रव्यमपि द्विविधं स्वपरभेदेन स्वद्रव्यं परद्रव्यं स्वभावः परभावश्च । सचित्तादिकं गोमहिष्यादिकं द्रव्यं । विद्यामंत्रादिकं भावः । संयते भिक्षायां प्रविष्टे स्वकीयं परकीयं वा सचित्तादिद्रव्यं दत्त्वाहारं प्रगृह्य ददाति तथा स्वमंत्रं परमंत्रं वा स्वविद्यां परविद्यां वा

दत्त्वाहारं प्रगृह्य ददाति यत् स क्रीतदोषः । कारुण्यदोष-दर्शनादिति । प्रज्ञप्त्यादिर्विद्या । चेटकादिर्मंत्र इति ॥ १६ ॥

ऋणदोषस्वरूपमाह-

डहरिय रिणं तु भणियं
पामिच्छं ओदणादिअण्णदरं ।
तं पुण दुविहं भणिदं
सवड्ढियमवड्ढियं चावि ॥ १७ ॥

लघु ऋणं तु भणितं प्रामृष्यं ओदनादि अन्यतरं ।
तत् पुनः द्विविधं भणितं सवृद्धिकमवृद्धिकं चापि ॥

डहरियरिणं तु—लघुऋण स्तोकर्णं भणितं । पामिच्छ प्रामृष्यं ओदनादिकं भक्त मण्डकादिमन्यतरत् । तत्पुनर्द्विविध सवृद्धिकमवृद्धिकं चापि । भिक्षौ चर्याया प्रविष्टे दातान्यदीयं गृहं गत्वा भक्त्या भक्तादिकं याचते वृद्धिं समिष्य वृद्ध्याविना वा साधुहेतोः । तवौदनादिक वृद्धिसहितमन्यथा वा दास्यामि मम भक्तं पान खाद्य मण्डकाश्च प्रयच्छ । एवं भणित्वा मण्डकादीन् गृहीत्वा संयतेभ्यो ददाति तदृणसहित प्रामृष्यं दोष जानीहि । दातुः क्लेशायासकरणादिदर्शनादिति ॥ १७ ॥

परावर्तदोषमाह-

**वीहीकूरादीहिं य सालीकूरादियं तु जं गहिदं ।**
**दातुमिति संजदाणं परियट्टं होदि णायव्वं ॥ १८**

ब्रीहिकूरादिभिः शालिकूरादिकं तु यत् गृहीतं ।
दातुमिति संयतेभ्यः परिवर्तं भवति ज्ञातव्यम् ॥

संयतेभ्यो दातुं ब्रीहिकूरादिभिर्यच्छालिकूरादिकं संगृहीतं तत्परिवर्तं भवति ज्ञातव्यं । मदीयब्रीहिभक्तं गृहीत्वा मम शालयोदनं प्रयच्छ साधुभ्योऽहं दास्यामीति भणित्वा दत्त्वा ब्रीहिभक्तादिकं गृह्णाति साधुनिमित्तं यत् परिवर्तनं नाम दोषं जानीहि । दातुः क्लेशकारणादिति ।

अभिघटदोषस्वरूपं विवृण्वन्नाह—

**देसत्ति य सव्वत्ति य**
**दुविहं पुण अभिहडं वियाणाहि ।**
**आचिण्णमणाचिण्णं**
**देसाविहडं हवे दुविहं ॥ १९ ॥**

देशइति च सर्वइति च द्विविधंपुनःअभिघटंविजानीहि ।
आचिन्नमनाचिन्नं देशाभिघटं भवेत् द्विविधं ॥

देश इति सर्व इति द्विविधं पुनरभिघटं विजानीहि । एकदेशादागतमोदनादिकं देशाभिघटं । सर्वस्मादागतमोदना-

दिकं सर्वाभिघटं । देशाभिघटं पुनर्द्विविध । आचिन्नानाचिन्नभेदात् । आचिन्न योग्य । अनाचिन्नमयोग्यमिति ॥ १९ ॥

आचिन्नानाचिन्नस्वरूपमाह—

उज्जु तिहिं सत्तहिं वा
घरेहिं जदि आगदं दु आचिण्णं ।
परदो वा तेहिं भवे
तव्विवरीदं अणाचिण्णं ॥ २० ॥

ऋजु त्रिभ्यःसप्तभ्यो वा गृहेभ्योयदि आगतं तु आचिन्नं
परतो वा तेभ्यो भवत् तद्विपरीत अनाचिन्नं ॥२०॥

ऋजुवृत्त्या पंक्तिस्वरूपेण यानि त्रीणि सप्त गृहाणि वा व्यवस्थितानि । तेभ्यस्त्रिभ्यः सप्तभ्यो वा गृहेभ्यो यदागतमोदनादिक वाचिन्नं ग्रहणयोग्य दोषाभावात् । परतस्त्रिभ्यः सप्तगृहेभ्य ऊर्ध्वं यदागतमोदनादिकमनाचिन्नं ग्रहणायोग्य तद्विपरीतं वा ऋजुवृत्त्या विपरीतेभ्यः सप्तभ्यो यदागतं तदप्यनाचिन्नमादातुमयोग्यं । यत्र तत्र स्थितेभ्यो गृहेभ्योऽपागत न म ह्य दोषदर्शनादिति ॥ २० ॥

सर्वाभिघटभेदं प्रतिपादयन्नाह—

सव्वाभिघडं चदुधा
सयपरगामे सदेसपरदेसे ।

पुव्वापरपाडणयडं
पढमं सेसंपि णादव्वं ॥ २१ ॥

सर्वाभिघटं चतुर्धा स्वपरग्रामे स्वदेशपरदेशे ।
पूर्वापरपाटनयनं प्रथमं शेषमपि ज्ञातव्यं ॥

सर्वाभिघटं चतुर्विधं जानीहि । स्वग्रामपरग्रामस्वदेशपरदेशभेदात् । स्वग्रामादागतं परग्रामादागतं स्वदेशादागतं परदेशादागतमोदनादिकं यत् तच्चतुर्विधं सर्वाभिघटं । यस्मिन् ग्रामे आस्यते स स्वग्राम इत्युच्यते । तस्मादन्यः स परग्राम इत्युच्यते । एवं स्वदेशः परदेशोऽपि ज्ञातव्यः । ननु स्वग्रामात्कथमागच्छतीत्येतस्यामाशंकायामाह—पूर्वपाटकात् परस्मिन् पाटके नयनं परपाटकाद्वा परस्मिन् नयनमोदनादिकस्य यत्तत्स्वग्रामाभिघटं प्रथमं जानीहि । तथाशेषमपि जानीहि परग्रामात्स्वग्रामे आनयनं स्वदेशात् स्वग्रामे आनयनं परदेशात्स्वग्रामे स्वदेशे वानयनमिति सर्वाभिघटदोषं चतुर्विधं जानीहि । प्रचुरेर्यापथदर्शनादिति ॥ २१ ॥

उद्भिन्नदोषमाह—

पिहिदं लंछिदयं वा
ओसहघिदसक्करादि जं दव्वं ।
उब्भिण्णिऊण देयं
उब्भिण्णं होदि णादव्वं ॥ २२ ॥

पिहितं लांछितं वा औषधघृतशर्करादि यत् द्रव्यं।
उद्भिद्य देयं उद्भिन्नं भवति ज्ञातव्यम् ॥

पिहितं पिधानादिकेनावृतं कर्दमजंतुना वा संवृतं । लांछितं मुद्रितं नामबिंबादिना च यदौषधं घृतशर्करादिकं गुडखंडलड्डुकादिकं द्रव्यमुद्भिद्योद्घाट्य देयं स उद्भिन्नदोषो भवति ज्ञातव्यः । पिपीलिकादिप्रवेशदर्शनादिति ।

मालारोहणं दोषं निरूपयन्नाह—

णिस्सेणीकट्ठादिहि
णिहिदं पूयादियं तु घेत्तूणं ।
मालारोहं किच्चा
देयं मालारोहणं णाम ॥ २३ ॥

निःश्रेणीकाष्ठादिभिः निहितं पूपादिकं तु गृहीत्वा।
मालारोहं कृत्वा देय मालारोहणं नाम ॥

निःश्रेण्या काष्ठादिभिर्हेतुभूतैर्मालारोहणं कृत्वा मालं द्वितीयगृहभूमिमारुह्य गृहोर्ध्वभागं चारुह्य निहितं स्थापितमपूपादिकं मंडकलड्डुकशर्करादिकं गृहीत्वा यद्देयं स मालारोहो नाम दोषः । दातुरपायदर्शनादिति ॥ २३ ॥

अच्छेद्यदोषस्वरूपमाह—

रायाचोरादीहिं य संजदभिक्खाममं तु दट्ठूणं।
बीहेदूण णिजुज्जं अच्छिज्जं होदि णादव्वं ॥
राजचौरादिभिश्च संयतभिक्षाश्रमं तु दृष्ट्वा।
भीपयित्वा नियुक्तं आछेद्यं भवति ज्ञातव्यम् ॥

संयतानां भिक्षाश्रमं दृष्ट्वा राजा चौरादय एवमाहुः कुटुम्बिकान् यदि संयतानामागतानां भिक्षादानं न कुरु(र्वे)ते तदानीं युष्माकं द्रव्यमपहरामो ग्रामाद्वा निर्वासयाम इति। एवं राज्ञा चौरादिभिर्वा कुटुम्बिकान् भापयित्वा नियुक्तं नियोजितं यद्दानं तदाच्छेद्यं नाम दोषो भवति ज्ञातव्यः। कुटुंबिनां भयकरणादिति ॥ २४ ॥

अनीशार्थदोषस्वरूपं विवृण्वन्नाह—

अणिसट्ठं पुण दुविहं
इस्सरमह णिस्सरं च दुवियप्पं।
पढमिस्सर सारक्खं
वत्तावत्तं च संघाडं ॥

अनीशार्थः पुनर्द्विविधः ईश्वरोयानीश्वरः चतुर्विकल्पः
प्रथम ईश्वरः सारक्षः व्यक्तोऽव्यक्तश्च संघाटः ॥

अनीशार्थोऽप्रधानहेतुः। स पुनर्द्विविध ईश्वरो वानी-

श्वरश्च । अथवाऽ धनेश्वर इति पाठः । अनीशोऽप्रधानोऽर्थः कारणं यस्यौदनादिकस्य तदौदनादिकमनीशार्थं तद्ग्रहणे यो दोषः सोऽप्यनीशार्थः कारणे कार्योपचारादिति । स चानीशार्थो द्विविधः ईश्वरानीश्वरभेदेन । द्विविधोऽपि चतुर्विधः । प्रथम ईश्वरः दानस्य सारक्षः सहारक्षैर्व र्तते इति सारक्षः यद्यपि दातुमिच्छति तथापि दातु न लभतेऽन्ये विघ्नं कुर्वन्ति तस्तस्य ददतः स ईश्वरो ददाति अन्ये चामात्यपुरोहितादयो विघ्नं कुर्वन्ति, एवं यदि तद्दानं गृह्णाति प्रथम ईश्वरो नामैकमेदोऽनीशार्थो दोष इति । तथानीश्वरोऽप्रधानहेतुर्यस्य दानस्य तद्दानमनीशार्थं दोषोऽप्यनीशार्थः इत्युच्यते कार्ये कारणोपचारात् । स चानीशार्थस्त्रिप्रकारो व्यक्तोऽव्यक्तः संघाटकः । दानादिकस्यानीश्वरः स्वामी न भवति किन्तु व्यक्तः प्रेक्षापूर्वकारी तेन दीयमानं यदि गृह्णाति तदा व्यक्तोऽनीश्वरो नामानीशार्थो दोष इति । तथा दानस्यानीश्वरस्तथा (दा) व्यक्तोऽप्रेक्षापूर्वकारी भवति तेन दीयमानं यदि गृह्णाति तदाव्यक्तानीश्वरो नामानीशार्थ इति । तथा संघाटकेन व्यक्ताव्यक्तानीश्वरेण दीयमानं यदि गृह्णाति तदा व्यक्ताव्यक्तसंघाटानीश्वरो नामानीशार्थो दोषः प्रावर्शनादिति । अथवैवं ग्राह्यं, ईश्वरेण प्रभुणा व्यक्तेनाव्यक्तेन वा यत्सारक्षं यत्प्रतिषिद्धं तद्दानं यदि साधु गृह्णाति तदा व्यक्ताव्यक्तेश्वरो नाम नीशार्थो दोषः । तथानीश्वरेण प्रभुणा व्यक्तेनाव्यक्तेन वा यत्प्रतिषिद्धं सारक्षं दानं तद्यदि गृह्णाति

साधुस्तदा व्यक्ताऽव्यक्तानीश्वरो नामानीशार्थो दोषः । तथा संघटकः सघवाय एको ददात्यपरो निषेधयति दानं तत्तथाभूतं यदि गृह्णाति साधुस्तदा संघाटको नामानीशार्थो दोष इति । ईश्वरो व्यक्ताऽव्यक्तसंघाटभेदेन द्विविधः । अनीश्वरो व्यक्ताऽव्यक्तसंघाटभेदेन द्विविध इति । अत्र चशब्दः समुच्चयार्थो द्रष्टव्यः । ईश्वरा द्विविधः । अनीश्वरो द्विविधः । प्रथम ईश्वरेण व्यक्ताव्यक्तसंघाटकेन वा मारब्धोऽनीशार्थः । द्वितीयोऽनीश्वरेण व्यक्ताव्यक्तसंघाटकेन वा संरब्धोऽनीशार्थ इति अथवा व्यक्तेनाऽव्यक्तेन चेश्वरेण मारब्धं प्रथम ईश्वरानीशार्थो द्विविधः । तथा व्यक्तेनाऽव्यक्तेन चानीश्वरेण सारब्धं, द्वितीयोऽनीश्वरोऽनीशार्थो द्विविध इति । तथा संघटकेन च सारब्धं पृथग्भूतोऽयं दोषोऽनीशार्थो द्रष्टव्यः सर्वत्र विरोधदर्शनादिति । अथवा निसृष्टो मुक्तो न निसृष्टोऽनिसृष्टो निवारितः स च द्विविधः ईश्वरोऽनीश्वरश्च । ईश्वरेण निसृष्टोऽनीश्वरेणऽनिसृष्टः ईश्वरश्चतुर्भेदोऽनीश्वर इति । प्रथमः ईश्वरः सारक्षो व्यक्तोऽव्यक्तः संघटकः । तथानीश्वरोऽपि सारक्षो व्यक्तोऽव्यक्तः संघाटकः । अत्र दियुक्तः सारक्षः बालो व्यक्तः द्व्योः स्वामित्वं संघाटकः । एवमनीश्वरोऽपि द्रष्टव्यः इति । एवंविधं सृष्टं निषिद्धं दत्तं वा दानं यदि गृह्यते तदा निसृष्टो नाम दोषो भवति विरोधदर्शनादिति ॥ २५ ॥

उत्पादनदोषान् प्रतिपादयन्नाह—

धादीदूदणिमित्ते आजीवं वणिवगे य तेगिंछे ।

कोधी माणी मायी लोही य हवंति दस एदे ॥
धात्रीदूतनिमित्तानि आजीवः वनीपकश्च चिकित्सा
क्रोधी मानी मायी लोभी च भवंति दश एते ॥

धादी-धात्री माता। दूद-दूतो लेखधारकः। णिमित्ते-निमित्तं ज्योतिषं। आजीवे-आजीवनमाजीविका। वणिवगेय-वनीपकवचनं दातुरनुकूलवचनं। तेगिछे-चिकित्सा वैद्यशास्त्रं। कोधी-क्रोधी। मायी-मानी। माई मायी। लोही-लोभी। हवंति दस एदे-भवन्ति दशैते उत्पादनदोषाः। ॥ २६ ॥ तथा-

पुव्वी पच्छा संथुदि विज्जामंते य चुण्णजोगे य
उप्पादणा य दोसो सोलसमो मूलकम्मे य ॥
पूर्वं पश्चात् संस्तुतिः विद्यामंत्रश्च चूर्णयोगश्च।
उत्पादनश्च दोषः षोडश मूलकर्म च ॥

स्तुतिशब्दः प्रत्येकमभिसम्बध्यते। पुव्वं पच्छा संथुदि पूर्वं संस्तुतिः। दानग्रहणात्प्राग्दातुः संस्तवः, (पश्चात्संस्तुतिः) दानं गृहीत्वा पश्चाद्दातुः संस्तवनं। विज्जा विद्या आकाशगामिनीरूपपरिवर्तिनीशस्त्रस्तम्भिन्यादिका। मंते च मंत्रश्च सर्पवृश्चिकविषापहरणाक्षराणि। चुण्णजोगे-चूर्णयोगश्च गात्रभूषणादिनिमित्तं द्रव्यधूलिः। उप्पादणा य दोसो-उत्पादना-

योत्पादननिमित्तं दोष उत्पादनदोषः । स प्रत्येकमभिसम्बध्यते । सोलसमो षोडशानां पूरणः षोडशः । मूलकर्मैव मूलकर्म अवशानां वशीकरणं । धात्रीकर्मणा सहचरितो दोषोऽपि धात्रीत्युच्यते ॥ २७ ॥

तं धात्रीदोषं विवृण्वन्नाह—

मज्जणमंडणधादी खेल्लावणखीरअंबधादी य ।
पंचविधधादिकम्मेणुप्पादो धादिदोसो दु ॥

मार्जनमंडनधात्री क्रीडनक्षीरांबधात्री च ।
पंचविधधात्रीकर्मणा उत्पादो धात्रीदोषस्तु ॥

धापयति दधातीति वा धात्री । मार्जनधात्री बालं स्नपयति या सा मार्जनधात्री । मण्डयति विभूषयति तिलकादिभिर्या सा मण्डनधात्री मण्डननिमित्तं माता । बालं क्रीडयति रमयति क्रीडनधात्री क्रीडानिमित्तं माता । क्षीरं धापयति दधाति या सा क्षीरधात्री स्तनपायिनी । अम्बधात्री जननी, स्वापयति या साऽप्यम्बधात्री । एतासां पंचविधानां धात्रीणां क्रियया कर्मणा य आहारादिरुत्पाद्यो स धात्रीनामोत्पादनदोषः । बालं स्नापयानेन प्रकारेण बालः स्नाप्यते येन सुखी नीरोगी च भवतीदं मार्जननिमित्तं वा कर्म गृहस्थायोपदिशति, तेन च कर्मणा गृहस्थो दानाय प्रवर्तते तद्दानं यदि गृह्णाति साधुस्तस्य धात्रीनामोत्पादनदोषः । तथा

वालं स्वयं मण्डयति मण्डननिमित्तं वा कर्मोपदिशति यस्मै दात्रे स तेन भक्तः सन् दानाय प्रवर्तते तद्दानं गृह्णाति साधुस्तस्य मण्डनधात्रीनामोत्पादनदोषः। तथा बालं स्वयं क्रीडयति क्रीडानिमित्तं च क्रियोपदिशति यस्मै दात्रे स दाता दानाय प्रवर्तते तद्दानं गृह्णाति साधुस्तस्य क्रीडनधात्री नामोत्पादनदोषः। तथा येन क्षीरं भवति येन च विधानेन बालाय क्षीरं दीयते तदुपदिशति यस्मै दात्रे स भक्तः सन् दाता दानाय प्रवर्तते तद्दानं यदि गृह्णाति तदा तस्य क्षीरधात्रीनामोत्पादनदोषः तथा स्वयं स्वापयति स्वापनिमित्तं विधानं चोपदिशति यस्मै दात्रे स दाता दानाय प्रवर्तते तद्दानं यदि गृह्णाति तदा तस्याम्बधात्री नामोत्पादनदोषः। कथमयं दोष इति चेत् स्वाध्यायविनाशमार्गदूषणादिदर्शनादिति ॥२८॥

दूतनामोत्पादनदोषं विवृण्वन्नाह—

**जलथलआयासगदं सयपरगामे सदेसपरदेसे।**
**संबंधिवयणणयणं दूदीदोसो हवदि एसो॥**

**जलस्थलाकाशगतं स्वपरग्रामे स्वदेशपरदेशे।**
**संबंधिवचननयनं दूतदोषः भवति एषः॥**

स्वग्रामात्परग्रामं गच्छति जले नावा तथा स्वदेशात्परदेशं गच्छति जले नावा तत्र तस्य गच्छतः कश्चिद् गृहस्थ एवमाह—भट्टारक! मदीयं संदेशं गृहीत्वा गच्छ स साधुस्तत्स-

म्बन्धिनो वचनं नीत्वा निवेदयति यस्मै प्रहितं स परमामस्थः परदेशस्थश्च तद्वचनं श्रुत्वा तुष्टः सन् दानादिकं ददाति तद्दानादिकं यदि साधुर्गृह्णाति तदा तस्य दूतकर्मणोत्पादनदोषः। तथा स्थले गच्छत आकाशे च गच्छतः साधोर्यत्सम्बंधिवचननयनं स्वग्रामात्परग्रामे स्वदेशात्परदेशे, यस्मिन् ग्रामे तिष्ठति स स्वग्राम इत्युच्यते, तथा यस्मिन् देशे तिष्ठति बहूनि दिनानि स्वदेश इत्युच्यते। इत्येवं जलगतं स्थलगतमाकाशगतं च तद्दूतेन नीयते इति तद्दूतमित्युच्यते। यदेतत्सम्बन्धिनो वचनस्य नयनं स एष दूतदोषो भवति। दूतकर्म शासनदोषायेति दोषदर्शनादिति ॥ २९ ॥

निमित्तस्वरूपमाह—

**वंजणमंगं च सरं छिण्णं भूमं च अंतरिक्खं च।**
**लक्खण सुविणं च तहा अट्ठविहं होइ णेमित्तं ॥**

व्यंजनमंगं च स्वरः छिन्नः भूमिश्च अंतरिक्षं च।
लक्षणं स्वप्नः च तथा अष्टविधं भवति निमित्तं ॥

व्यञ्जनं मशकतिलकादिकं। अङ्गं च शरीरावयवः। स्वरः शब्दः। छिन्नः छेदः, खड्गादिप्रहारो वस्त्रादिच्छेदो वा। भूमि भूमिविभागः। अन्तरिक्षमादित्यग्रहाद्युदयास्तमनं। लक्षणं नन्दिकावर्तपद्मचक्रादिकं। स्वप्नश्च सुप्तस्य हस्तिविमानमहिषारोहणादिदर्शनं च तथाष्टप्रकारं भवति निमि-

च । व्यञ्जनं दृष्ट्वा यच्छुभाशुभं ज्ञायते पुरुषस्य तद्व्यञ्जनं निमित्तमित्युच्यते । तथाङ्गं शिरोग्रीवादिकं दृष्ट्वा पुरुषस्य यच्छुभाशुभं ज्ञायते तदङ्गं निमित्तमिति । तथा यं स्वरं शब्दविशेषं श्रुत्वा पुरुषस्यान्यस्य वा शुभाशुभं ज्ञायते तत्स्वरनिमित्तमिति । यं प्रहारं छेदं वा दृष्ट्वा पुरुषस्यान्यस्य वा शुभाशुभं ज्ञायते तच्छिन्ननिमित्तं नाम । तथा यं भूमिविभागं दृष्ट्वा पुरुषस्यान्यस्य वा शुभाशुभं ज्ञायते तद्भौमनिमित्तं नाम । यदन्तरिक्षस्य व्यवस्थितं ग्रहयुद्धं ग्रहास्तमनं ग्रहनिर्घातादिकं समीक्ष्य प्रजायाः शुभाशुभं विबुध्यते तदन्तरिक्षं नाम । यल्लक्षणं दृष्ट्वा पुरुषस्यान्यस्य वा शुभाशुभं ज्ञायते तल्लक्षणनिमित्तं नाम । यं स्वप्नं दृष्ट्वा पुरुषस्यान्यस्य वा शुभाशुभं परिच्छिद्यते तत्स्वप्ननिमित्तं नाम । तथा चशब्देन भूमिगर्जनदिग्दाहादिकं परिगृह्यते । एतेन निमित्तेन भिक्षामुत्पाद्य यदि भुंक्ते तदा तस्य निमित्तनामोत्पादनदोषः । रसास्वादनदैन्यादिदोषदर्शनादिति ॥ ३० ॥

आजीवं दोषं निरूपयन्नाह-

**जादी कुलं च सिप्पं तवकम्मं ईसरत्त आजीवं ।**
**तेहिं पुण उप्पादो आजीव दोसो हवदि एसो ॥**

जातिः कुलं च शिल्पं तपःकर्म ईश्वरत्वं आजीवं ।
तैः पुनः उत्पादः आजीवदोषो भवति एषः ॥

जातिर्मातृसन्ततिः । कुलं पितृसन्ततिः । पातृशुद्धिः -पितृशुद्धिर्वा । शिल्पकर्म लेपचित्रपुस्तकादिकर्म हस्तविज्ञानं । तपःकर्म तपोऽनुष्ठानं । ईश्वरत्वं च । आजीव्यतेऽनेनाजीवः । आत्मनो जातिं कुलं च निर्दिश्य शिल्पकर्म तपःकर्मेश्वरत्वं च निर्दिश्याजीवनं करोति यतोऽस्त आजीववचनान्येतानि तेभ्यो जातिकथनादिभ्यः पुनरुत्पाद आहारस्य योऽयं स आजीव-दोषो भवत्येषः । वीर्यगूहनदीनत्वादिदोषदर्शनादिति ॥३१॥

वनीपकवचनं निरूपयन्नाह—

साणकिविणतिधिमाहण-
पासंडियसवणकागदाणादी ।
पुण्णं णवेति पुट्ठे
पुण्णोत्ति वणीवयं वयणं ॥

श्वाकृपणातिथिब्राह्मणपाखंडिश्रमणकाकदानादिः ।
पुण्यं नवा इति पृष्टे पुण्यमिति वनीपकं वचनं ॥

शुनां, कृपणादीनां कुष्ठव्याध्याद्यार्तादीनां अतिथीनां म-ध्यान्हकालागतानां भिक्षुकाणां, ब्राह्मणानां मांसादिभक्षिणां पाखंडिनां दीक्षोपजीविनां, श्रवणानामाजीवकानां छात्राणां वा काकादीनां च यद्दानादिकं दीयते तेन पुण्यं भवति किं

वा न भवतीत्येवं पृष्टे दानपतिना, 'भवति पुण्यमिति' यद्येवं ब्रूयात्तद्वनीपकं वचनं दानपत्युनुकूलवचनं प्रतिपाद्य यदि भुञ्जीत तदा तस्य वनीपकनामोत्पादनदोषः। दीनत्वादिदोषदर्शनादिति ॥ ३२ ॥

चिकित्सां प्रतिपादयन्नाह—

**कोमारतणुतिगिंछारसायणविसभूदखारतंतं च।**
**सालंकियं च सल्लं तिगिंछदोसो दु अट्ठविहो ॥**

कोमारतनुचिकित्सारसायनविषभूतक्षारतंत्रं च।
शालकिकं च शल्यं चिकित्सादोषस्तु अष्टविधः ॥

कौमारं बालवैद्यं मासिकसांवत्सरिकादिग्रहत्रासनहेतुः शास्त्रं तनुचिकित्साज्वरादिनिराकरणं कण्ठोदरशोधनकारणं च। रसायनं वलिपलितादिनिराकरणं बहुकालजीवित्वं च। विषं स्थावरजंगमं सकृत्रिमभेदभिन्नं। तस्य विषस्य चिकित्सा विषापहारः। भूत (तः) पिशाचादि तस्य चिकित्सा भूतापनयनशास्त्रं। क्षारतंत्रं क्षारद्रव्यं दुष्टव्रणादिशोधनकरं। शलाकया निर्वृत्तं शालाकिकं अक्षिपटलाद्युद्घाटनं। शल्यं भूमिशल्यं शरीरशल्यं च तोमरादिकं शरीरशल्यं, अस्थ्यादिकं भूमिशल्यं तस्यापनयनकारकं शास्त्रं शल्यमित्युच्यते। तथा विषापनयनशास्त्रं विषमिति। भूतापनयननिमित्तं शास्त्रं भूतमिति, कार्ये कारणोपचारादिति। अथवा चिकित्साशब्दः

प्रत्येकमभिसम्बध्यते काकाक्षितारकवदिति । एवमष्टप्रकारेण चिकित्साशास्त्रेणोपकारं कृत्वाहारादिकं गृह्णाति तदानीं तस्याष्टप्रकारश्चिकित्सादोषो भवत्येव सावद्यादिदोषदर्शनादिति ॥ ३३ ॥

क्रोधमानमायालोभदोषान् प्रतिपादयन्नाह—

**कोधेण य माणेण य मायालोभेण चावि उप्पादो**
**उप्पादणा य दोसो चदुव्विहो होदि णायव्वो ॥**

क्रोधेन च मानेन च मायालोभेन चापि उत्पादः ।
उत्पादनश्च दोषः चतुर्विधो भवति ज्ञातव्यः ॥

क्रोधमानमायालोभेन च योऽयं भिक्षाया उत्पाद स उत्पादनदोषश्चतुष्प्रकारस्तैर्ज्ञातव्य इति । क्रोधं कृत्वा भिक्षामुत्पादयति आत्मनो यदि तदा क्रोधो नामोत्पादनदोषः तथा मानं गर्व कृत्वा यद्यात्मनो भिक्षादिकमुत्पादयति तदा मानदोषः । मायां कुटिलभावं कृत्वा यद्यात्मनो भिक्षादिकमुत्पादयति तदा मायानामोत्पादनदोषः । तथा लोभं कांक्षां प्रदर्श्य भिक्षां यद्यात्मन उत्पादयति तदा लोभोत्पादनदोषो भावदोषादिदर्शनादिति ॥ ३४ ॥

पुनरपि तान् दृष्टान्तेन पोषयन्नाह—

**कोधो य हत्थिकप्पे माणो वेणायडम्मि णयरम्मि ।**

माया वाणारसिए लोहो पुण रासियाणम्मि ॥'

क्रोधश्च हस्तिकल्पे मानो वेणातटे नगरे ।
माया वाराणस्यां लोभो राशियाने ॥३५ ॥

हस्तिकल्पपत्तने कश्चित्साधुः क्रोधेन भिक्षामुत्पादितवान् । तथा वेन्नातटनगरे कश्चित्संयतो मानेन भिक्षामुत्पादितवान् । तथा वाणारस्यां कश्चित्साधुः मायां कृत्वा भिक्षामुत्पादितवान् । तथान्यः संयतो लोभं प्रदर्श्य राशियाने भिक्षामुत्पादितवानिति । तेन क्रोधो हस्तिकल्पे, मानो वेन्नातटनगरे माया वाणारस्यां लोभो राशियाने इत्युच्यते । अत्र कथा उत्प्रेक्ष्य वाच्या इति ॥ ३५ ॥

पूर्वसंस्तुतिदोषमाह—

दायगपुरदो कित्ती तं दाणवदी जसोधरो वेत्ति।
पुव्वीसंथुदि दोसा विस्सरिदे बोधणं चावि ॥

दायकपुरतःकीर्तिस्त्वं दानपतिः यशोधरो वा इति ।
पूर्वसंस्तुतिदोषो विस्मृते बोधनं चापि ॥

ददातीति दायको दानपतिः तस्य पुरतः कीर्तिं ख्यातं (ति) ब्रूते । कथं, त्वं दानपतिर्यशोधरः त्वदीया कीर्तिर्विश्रुता लोके । यद्दातुरग्रतो दानग्रहणात्प्रागेव ब्रूते तस्य पूर्वसंस्तुतिदोषो नाम जायते । विस्मृतस्य च दातृसम्बोधनं

त्वं पूर्वं महादानपतिरिदानीं किमिति कृत्वा विस्मृत इति स-म्बोधनं करोति यस्तस्यापि पूर्वसंस्तुतिदोषो भवतीति । यां कीर्तिं ब्रूते, यच्च स्मरणं करोति तत्सर्वं पूर्वसंस्तुतिदोषो न-ग्नाचार्यकर्तव्यदोषदर्शनादिति ॥ ३६ ॥

पश्चात्संस्तुतिदोषमाह—

पच्छा संथुदिदोसो दाणं गहिदूण तं पुणो कित्तिं
विक्खादो दाणवदी तुज्झ जसो विस्सुदो वेंति ।

पश्चात् संस्तुतिदोषः दानं गृहीत्वा तद् पुनःकीर्तिं ।
विख्यातः दानपतिः तव यशः विश्रुतं ब्रूते ॥

पश्चात्संस्तुतिदोषो दानमाहारादिकं गृहीत्वा ततः पुनः पश्चादेवं कीर्तिं ब्रूते विख्यातस्त्वं दानपतिस्त्वं, तव यशोवि-श्रुतमिति ब्रूते यस्तस्य पश्चात् संस्तुतिदोषः, कार्पण्यादिदो-षदर्शनादिति ॥ ३७ ॥

विद्योत्पादनदोषमाह—

विज्जा साधितसिद्धा तिस्से आसापदाणकरणेहिं
तस्से माहप्पेण य विज्जादोसो दु उप्पादो ॥

विद्या साधितसिद्धा तस्याः आशाप्रदानकरणैः ।
तस्या माहात्म्येन च विद्यादोषस्तु उत्पादः ॥

विद्या नाम साधितसिद्धा साधिता सती सिद्धा भवति तस्या विद्याया आशाप्रदानकरणेन तुभ्यमहं विद्यामिमां दास्यामि तस्याश्च माहात्म्येन यो जीवति तस्य विद्योत्पादनो नाम दोषः आहाराद्याकांक्षाया दर्शनादिति ॥ ३८ ॥

मंत्रोत्पादनदोषमाह—

**सिद्धे पढिदे मंते तस्स य आसापदाणकरणेण।**
**तस्स य माहप्पेण य उप्पादो मंतदोसो दु ॥**

सिद्धे पठिते मंत्रे तस्य च आशाप्रदानकरणेन ।
*तस्य च माहात्म्येन च उत्पादो मंत्रदोषस्तु ॥*

सिद्धे पठिते मंत्रे पठितमात्रेण यो मंत्रः सिद्धिमुपयाति स पठितसिद्धो मंत्रस्तस्य मंत्रस्याशाप्रदानकरणेन तवेमं मंत्रं दास्यामीत्याशा करणयुक्तया तस्या माहात्म्येन च यो जीवत्याहारादिकं च गृह्णाति तस्य मंत्रोत्पादनदोषः । लोकमतारणजिह्वागृद्ध्यादिदोषदर्शनादिति ॥ ३९ ॥

अथवा विद्योत्पादनदोषो मंत्रोत्पादनदोषश्चैवं ग्राह्यः इत्याशंक्याह—

**आहारदायगाणं विज्जामंतेहिं देवदाणं तु ।**
**आहूय साधिदव्वा विज्जामंतो हवे दोसो ॥४०॥**

आहारदायकानां विद्यामंत्रः देवतानां तु ।

आहूय साधितव्या विद्यामंत्रः भवेत् दोषः ॥ ४० ॥

आहारदात्री भोजनदानशीला देवता व्यंतरदेवान् विद्यया मंत्रेण चाहूयानीय साधितव्यास्तासां साधनं क्रियते यद्दानार्थं स विद्यादोषो मंत्रदोषश्च भवति । अथवाऽऽहारदायकानां निमित्तं विद्यया मंत्रेण वाहूय देवतानां साधितव्यं साधनं क्रियते यत् स विद्यामंत्रदोषः । अस्य च पूर्वयोर्विद्यामंत्रदोषयोर्मध्ये निपातः इति कृत्वा नायं पृथग्दोषः पठितस्तयोरन्तर्भावादिति ॥ ४० ॥

चूर्णदोषमाह—

णेत्तस्संजणचुण्णं
भूसणचुण्णं च गत्तसोभयरं ।
चुण्णं तेणुप्पादो
चुण्णयदोसो हवदि एसो ॥ ४१ ॥

नेत्रयोरंजनचूर्णं भूषणचूर्णं च गात्रशोभाकरं ।
चूर्णं तेनोत्पादः चूर्णदोषो भवति एषः ॥ ४१ ॥

नेत्रयोरञ्जनं चूर्णं चक्षुषोर्निर्मलीकरणनिमित्तमञ्जनं द्रव्यरजः । तथा भूषणनिमित्तं चूर्णं येन चूर्णेन तिलकपत्रस्यत्पादयः क्रियन्ते तद्भूषणद्रव्यरजः । गात्रस्य शरीरस्य शोभाकरं च चूर्णं येन चूर्णेन शरीरस्य दीप्त्यादयो भवन्ति

तच्छरीरशोभानिमित्तं चूर्णमिति । तेन चूर्णेन योयमुत्पादो भोजनस्य क्रियते स चूर्णोत्पादनामदोषो भवत्येप जीविकादिक्रियया जीवनादिति ॥ ४१ ॥

मूलकर्मदोष प्रतिपादयन्नाह——

अवसाणं वसियरणं
संजोजयणं च विप्पजुत्ताणं ।
भणिदं तु मूलकम्मं
एदे उप्पादणा दोसा ॥ ४२ ॥

अवशानां वशीकरणं संयोजनं च विप्रयुक्तानां ।
भणितं तु मूलकर्म एते उत्पादना दोपाः ॥ ४२ ॥

अवशाना वशीकरणं यद्विप्रयुक्ताना च संयोजनं यत्क्रियते तद्भणित मूलकर्म। अनेन मूलकर्मणोत्पादो यो भक्तादिकस्य स मूलकर्मदोपः । सुष्ठु लज्जाद्याभोगस्य करणादिति। एते उत्पादनदोषास्तयोद्गमदोपाश्च सर्वे एते परित्याज्या अधःकर्मांशदर्शनात् । एतेष्वधःकर्मांशस्य सद्भावोऽस्ति यतः। तथान्ये च दोपाः जुगुप्सादयो दर्शनदूपणादयः सम्भवन्ति येभ्यस्तेऽपि परित्याज्या इति ॥ ४२ ॥

अशनदोपान् प्रतिपादयन्नाह—

संकिदमक्खिदपिहिदं

संववहरणदायगुम्मिस्से ।
अपरिणदलित्तछोडिद
एषणदोसाइं दस एदे ॥४३॥

शंकितम्रक्षितनिक्षिप्तपिहितसंव्यवहरणदायकोन्मिश्राः
अपरिणतलिप्तत्यक्ताः अशनदोषा दश एते ॥

शंकयोत्पन्नः शंकितः, किमयमाहारोऽधःकर्मणा निष्पन्न उत नेति शंकां कृत्वा भुंक्ते यस्तस्य शंकितनामाशनदोषः। तथा म्रक्षितस्तैलाद्यभ्यक्तस्तेन भाजनादिना दीयमानमाहारं यदि गृह्णाति म्रक्षितदोषो भवति। तथा निक्षिप्तः स्थापितः, सचित्तादिषु परिनिक्षिप्तमाहारं यदि गृह्णाति साधुस्तदा तस्य निक्षिप्तदोषः । तथा विहितश्छादितः अप्रासुकेन प्रासुकेन च महता यदवष्टब्धमाहारादिकं तदावरणमुत्क्षिप्य दीयमानं यदि गृह्णाति तदा तस्य पिहितनामाशनदोषः । तथा संव्यवहरणं दानार्थं संव्यवहारं कृत्वा यदि ददाति तदान्नं यदि साधुर्गृह्णाति तदा तस्य संव्यवहरणनामाशनदोषः तथा दायकः परिवेषकः, तेनाशुद्धेन दीयमानमाहारं यदि गृह्णाति साधुस्तदा तस्य दायकनामाशनदोषः । तथोन्मिश्रोऽप्रासुकेन द्रव्येण पृथिव्यादिसचित्तेन मिश्र उन्मिश्र इत्युच्यते तं यद्याद्दत्ते उन्मिश्रनामाशनदोषः । तथाऽपरिणतोऽविध्वस्तोऽग्न्यादिकेनापक्वमाहारं पानादिकं वा यद्याद्दत्तेऽ

परिणतनामाशनदोषः । तथा लिप्तोऽप्रासुकवर्णादिसंसक्तस्तेन भाजनादिना दीयमानमाहारादिकं यदि गृह्णाति तदा तस्य लिप्तनामाशनदोषः । तथा छोडिदं परित्यजनं भुजानस्यास्थिरपाणिपात्रेणाहारस्य परिशतन गलनं परित्यजनं यत्क्रियते तत्परित्यजननामाशनदोषः । एतेऽशनदोषा दशैव भवंति ज्ञातव्या इति ॥ ४३ ॥

शंकितदोषं विवृण्वन्नाह—

**असणं च पाणयं वा**
**खादीयमध सादियं च अज्झप्पे ।**
**कप्पियमकप्पियत्ति य**
**संदिद्धं संकियं जाणे ॥ ४४ ॥**

अशनं च पानकं वा खाद्यं अथ स्वाद्यं च अध्यात्मनि
कल्पितमकल्पितमिति च सादिग्धं शंकितं जानीहि

अशनं भक्तादिकं, पानकं दधिक्षीरादिकं खाद्य लड्डुकशोकवर्त्यादिकं, अथ स्वाद्य एलाकस्तूरीलवंगक्कोलादिकं । चाशब्दैरत्र स्वगतभेदा ग्राह्याः । अध्यात्मे आगमे चेतसि वा कल्पित योग्यमकल्पितमयोग्यमिति सन्दिग्धं सशयस्थं शंकितं जानीहि, आगमे किमेतन्मम कल्प्यमुत नेति यद्येवं संदिग्धमाहारं भुक्ते तदा शकितनामाशनदोषं जानीहि ।

अथवाध्यात्मे चेतसि किमधःकर्मसहितमुत नेति सन्दिग्धमाहारं यदि गृह्णीयाच्छंकितं जानीहि ॥ ४४ ॥

द्वितीयं म्रक्षितदोषमाह—

ससिणिद्धेण य देयं
हत्थेण य भायणेण दव्वीए ।
एसो मःक्खिददोसो
परिहरदव्वो सदा मुणिणा ॥४५॥

सस्निग्धेन च देयं हस्तेन च भाजनेन दर्व्या ।
एपः म्रक्षितदोपः परिहर्तव्यः सदा मुनिना ॥४५॥

सस्निग्धेन हस्तेन भाजनेन दर्व्या कटच्छुकेन यद्देयं भक्तादिकं च यदि गृह्यते तदा म्रक्षितदोषो भवति । तस्मादेप म्रक्षितदोपः परिहर्तव्यो मुनिना सम्मूर्च्छनादिसूक्ष्मदोपदर्शनादिति ॥ ४५ ॥

निक्षिप्तदोषमाह—

सचित्त पुढविआऊ
तेऊहरिदं च वीयतसजीवा ।
जं तेसिमुवरि ठविदं
णिक्खित्तं होदि छब्भेयं ॥ ४६ ॥

सचित्ता: पृथिव्यप्तेजोहरितानि च वीजत्रसजीवा: ।
यत्तेषामुपरि स्थापितं निक्षिप्तं भवति षड्भेदं ॥४६॥

सचित्तपृथिव्या सचित्ताप्सु सचित्ततेजसि हरितकायेषु वीजकायेषु त्रसजीवेषु तेषूपरि यत्स्थापितमाहारादिकं तन्निक्षिप्तं भवति षड्भेदं। अथवा सह चित्तेनाप्रासुकेन वर्तते इति सचित्त। सचित्तं च पृथिवीकायाश्चाप्कायाश्च तेजःकायाश्च हरितकायाश्च वीजकायाश्च त्रसजीवाश्च तेषामुपरि यन्निक्षिप्त सचित्तं तत् षड्भेदं भवति ज्ञातव्यं ॥ ४६ ॥

पिहितदोषमाह—

सचित्तेण व पिहिदं
अथवा अचित्तगुरुगापिहिदं च।
तं छंडिय जं देयं
पिहिदं तं होदि वोधव्वो ॥

सचित्तेन वा पिहितं अथवा अचित्तगुरुकपिहितं च।
तं त्यक्त्वा यद्देयं पिहितं तत् भवति बोद्धव्यं ॥ ४७ ॥

सचित्तेन पिहितमप्रासुकेन पिहित। अथवाऽचित्तगुरुक पिहित वा प्रासुकेण ( न ) गुरुकेण यद्वावृतं तत्त्यक्त्वा यद्देयमाहारादिक यदि गृह्यते पिहितं नाम दोषं भवति बोद्धव्यं ज्ञातव्यमिति ॥ ४७ ॥

संव्यवहारदोषमाह—

संववहरणं किच्चा
पदादुमिदि चेल भायणादीणं।
असमिक्खय जं देयं
संववहरणो हवदि दोसो ॥ ४८ ॥

संव्यवहरणं कृत्वा प्रदातुमिति चेत् भाजनादीनां ।
असमीक्ष्य यद्देयं संव्यवहरणो भवति दोषः ॥ ४८ ॥

संव्यवहरणं संकटिति व्यवहारं कृत्वा, प्रदातुमिति चेलभाजनादीनां संभ्रमेणाहरणं वा कृत्वा, प्रकर्षेण दाननिमित्तं वस्त्रभाजनादीनां झटिति संव्यवहरणं कृत्वाऽसमीक्ष्य यद्देयं पानभोजनादिकं तद्यदि संगृह्यते संव्यवहरणं दोषो भवत्येष इति ॥ ४८ ॥

दायकदोषमाह—

सूदी सुंडी रोगी
मदयणपुंसय पिसायणग्गो य ।
उच्चारपडिदवंतरु-
हिरवेसी समणी अंगमक्खीया ॥४९॥

सूतिः शौंडी रोगी मृतकनपुंसकपिशाचनग्नश्च ।

उच्चारपातितवांतरुधिरवेश्या श्रमणिका अंगमृक्षिका॥

सूतिः या बालं प्रसाधयति । सुंडी–मद्यपानलम्पटः । रोगी व्याधिग्रस्तः । मृतकं, मृतकं श्मशाने परिक्षिप्यागतो यः स मृतक इत्युच्यते । मृतकसूतकेन यो जुष्टः सोऽपि मृतक इत्युच्यते । नउंसय–न स्त्री न पुमान् नपुंसकमिति जानीहि । पिशाचो वाताद्युपहतः । नग्नः पटाद्यावरणरहितो गृहस्थः । उच्चार मूत्रादीन् कृत्वा य आगतः स उच्चार इत्युच्यते। पतितो मूर्च्छागतः । वान्तश्छर्दिं कृत्वा य आगतः । रुधिरं रुधिरसहितः । वेश्या दासी । श्रमणिकाऽऽर्यिका । अथवा पचश्रमणिका रक्तपटिकादयः । अगम्रक्षिका अगाभ्यगनकारिणी । ॥ ४९ ॥ तथा—

अतिबाला अतिवुड्ढा
घासत्ती गब्भिणी य अंधलिया ।
अंतरिदा व णिसण्णा
उच्चत्था अहव णीचत्था ॥ ५० ॥

अतिबाला अतिवृद्धा ग्रासयंती च गर्भिणी च अंधलिका
अंतरिता वा निषण्णा उच्चस्था अथवा नीचस्था ॥ ५०

अतिबाला अतिमुग्धा, अतिवृद्धा अतीवजराग्रस्ता । ग्रासयन्ती भक्षयन्ती उच्छिष्टा । गर्भिणी गुरुभारा पंचमा-

सिका। अंधलिका चक्षूरहिता। अन्तरिता कुड्यादिभिर्व्यवहिता। आसीनोपविष्टा। उच्चःस्था उन्नतप्रदेशस्थिता। नीचस्था निम्नप्रदेशस्थिता। एवं पुरुषो वा वनिता च यदि ददाति तदा न ग्राह्य भोजनादिकमिति ॥ ५० ॥ तथा—

पूयण पज्जलणं वा
सारण पच्छादणं च विज्झवणं।
किचा तहाग्गिकज्जं
णिव्वादं घट्टणं चावि ॥ ५१

फूत्करणं प्रज्वालनं वा सारणं प्रच्छादनं च विध्यापनं कृत्वा तथाग्निकार्यं निर्वातं घट्टनं चापि ॥ ५१ ॥

पूयण—संधुक्षणं मुखवातेनान्येन वा अग्निना काष्ठादीनां प्रज्वालन प्रद्योतनं वा सारणं काष्ठादीनामुत्कर्षणं, प्रच्छादनं भस्मादिना विध्यापनं जलादिना कृ वा तथान्यदपि अग्निकार्यं, निर्वातं निर्वाणं काष्ठादिपरित्यागः, घट्टनं चापि कुड्यादिनावरणं ॥ ५१ ॥ तथा—

लेवणमज्जणकम्मं
पियमाणं दारयं च णिक्खविय।
एवंविहादिया पुण

दाणं जदि दिंति दायगा दोसा ॥

लेपनमार्जनकर्म पिबंतं दारकं च निक्षिप्य ।
एवंविधादिकाःपुनः दानं यदि ददाति दायका दोषाः॥

लेपं गोमयकर्दमादिना कुड्यादेर्मार्जनं स्नानादिकं कर्म कृत्वेति सम्बंधः । पिबन्तं दारकं च स्तनयाददानं बालं निक्षिप्य त्यक्त्वा, अन्यांश्चैवंविधादिकान् कृत्वा पुनर्दानं यदि दत्ते दायकदोषा भवन्तीति ॥ ५२ ॥

उन्मिश्रदोषमाह ।

पुढवी आऊ य तहा हरिदा बीया तसा य सज्जीवा।
पंचेहिं तेहिं मिस्सं आहारं होदि उम्मिस्सं॥ ५३॥

पृथिव्यापश्च तथा हरिता बीजानि त्रसाश्च सजीवाः।
पंचभिस्तैः मिश्र आहारः भवति उन्मिश्रः ॥

पृथिवी मृत्तिका, आपश्चाप्रासुकः, तथा हरितकाया पत्र-पुष्पफलादयः । बीयाणि-बीजानि यवगोधूमादयः । त्रसाश्च सजीवा निर्जीवाः पुनर्मलमध्ये भविष्यन्ति दोषा इति । तैः पंचभिर्मिश्र आहारो भवत्युन्मिश्रः सर्वथा वर्जनीयो महादोष-इति कृत्वेति ॥ ५३ ॥

अपरिणतदोषमाह-

तिलतंडुलउसणोदय
चणोदय तुसोदयं अविद्धत्थं ।
अण्णं तहाविहं वा
अपरिणदं णेव गेण्हिज्जो ॥ ५४ ॥

तिलतंडुलोष्णोदकं चणोदकं तुषोदकं अविध्वस्तं ।
अन्यं तथाविधं वा अपरिणतं नैव गृह्णीयात् ॥ ५४ ॥

तिलोदकं तिलप्रक्षालनं । तंदुलोदकं तंदुलप्रक्षालनं । उष्णोदकं तप्तं भूत्वा शीतं च चणोदकं चणप्रक्षालनं । तुषोदकं तुषप्रक्षालनं । अविध्वस्तमपरिणतं आत्मीयवर्णगन्धरसापरित्यक्तं । अन्यदपि तथाविधमपरिणतं हरीतकीचूर्णादिना अविध्वस्तं । नैव गृह्णीयात् नैव ग्राह्यमिति । एतानि परिणतानि ग्राह्याणीति ॥ ५४ ॥

लिप्तदोष विवृण्वन्नाह–

गेरुय हरिदालेण व
सेडीय मणोसिलामपिट्ठेण ।
सपवालोदणलेवे
ण व देयं करभायणे लित्तं ॥ ५५ ॥

गैरिकया हरितालेन वा

सेटिकया मनःशिलया आमपिष्टेन।
सप्रबालोदनलेपेन वा
देयं करभाजने लिप्तं ॥ ५५ ॥

गैरिकया रक्तद्रव्येण, हरितालेन सेढिकया पटिकया पांडुमृत्तिकया, मनःशिलया आमपिष्टेन वा तंदुलादिचूर्णेन सप्रवालेन अपक्वशाकेन अप्रासुकोदकेन वा आर्द्रेणैव हस्तेन भाजनेन वा यद्देयं तल्लिप्तं नाम दोषं विजानीहि ॥ ५५ ॥

परिजनदोषमाह—

बहु परिसाडणमुज्झिअ
आहारो परिगलंत दिज्जंतं।
छंडिय भुंजणमहवा
छंडियदोसो हवे णेओ ॥ ५६ ॥

बहु परिसातनमुज्झित्वा आहारं परिगलंतं दीयमानं।
त्यक्त्वा भुंजनमथवा त्यक्तदोषो भवेत् ज्ञेयः ॥५६॥

बहुपरिसातनमुज्झित्वा बहुप्रसातनं कृत्वा भोज्यं स्तोकं त्याज्यं बहुपात्रहारेण सोऽपि बहुपरिसातनमित्युच्यते। आहारं परिगलंतं दीयमानं तक्रघृतोदकादिभिः परिस्रवंतं छिद्रहस्तैश्च बहुपरिसातनं च कृत्वाहारं यदि गृह्णाति त्यक्त्वा च

कमाहारमपरं भुंक्ते यस्तस्य त्यक्तदोषो भवति। एते अशनदोषाः दश परिहरणीयाः । सावद्यकारणाज्जीवदयाहेतोर्लोकजुगुप्सा ततश्चेति ॥ ५६ ॥

संयोजनाप्रमाणदोषावाह—

संजोयणा य दोसो
जो संजोएदि भत्तपाणं तु।
अदिमत्तो आहारो
पमाणदोसो हवदि एसो ॥ ५७ ॥

संयोजनं च दोषः यः संयोजयति भक्तपानं तु।
अतिमात्र आहारः प्रमाणदोषो भवति एषः ॥ ५७ ॥

संयोजनं च दोषो भवति। यः संयोजयति भक्तं पानं तु। शीतं भक्तं पानेनोष्णेन संयोजयति। शीतं वा पानं उष्णेन भक्तादिना संयोजयति। अन्यदपि विरुद्धं परस्परं यद्यदि संयोजयति तस्य संयोजननाम दोषो भवति। अतिमात्र आहारः—अशनस्य सव्यंजनस्य तृतीयभागमुदकस्योदरस्य यः पूरयति, चतुर्थभागं चावशेषयति यस्तस्य प्रमाणभूत आहारो भवति, अस्मादन्यथा यः कुर्यात्तस्यातिमात्रो नामाहारदोषो भवति। प्रमाणातिरिक्ते आहारे गृहीते स्वाध्यायो न प्रवर्तते, षडावश्यकक्रियाः कर्तुं न शक्यंते, ज्वरादयश्च संतापयन्ति, निद्रालस्यादयश्च दोषा जायंते इति ॥ ५७ ॥

अंगारधूमदोषानाह—

तं होदि सयंगालं
जं आहारेदि मुच्छिदो संतो।
तं पुण होदि सधूमं
जं आहारेदि णिंदिंदो ॥ ५८ ॥

तद् भवति सांगारं यत् आहरति मूर्छितः सन् ।
तत् पुनः भवति सधूमं यत् आहरति निंदितः॥ ५८ ॥

यदि मूर्छितः सन् गृद्ध्या युक्तः आहारमभ्यवहरति भुंक्ते तदा तस्य पूर्वोक्तोऽङ्गारादिदोषो भवति, सुष्ठु गृद्धिदर्शनादिति । तत्पुनर्भवति स पूर्वोक्तो धूमो नाम दोषः, यस्मादाहरति निंदन् जुगुप्समानो विरूपकमेतदनिष्टं मम, एवं कृत्वा यदि भुंक्ते तदानीं धूमो नाम दोषो भवत्येव, अन्तःसंक्लेशदर्शनादिति ॥ ५८ ॥

कारणमाह—

छहिं कारणेहिं असणं
आहारंतो वि आयरदि धम्मं।
छहिं चेव कारणेहिं दु
णिज्जुहवंतो वि आचरदि॥ ५९॥

षड्भिः कारणैः अशनं आहरन्नपि आचरति धर्मं ।
षड्भिः चैव कारणैः तु उज्झन्नपि आचरति ॥ ५९ ॥

षड्भिः कारणैः प्रयोजनैस्तु निरवशेषमशनमाहारं भोज्यखाद्यलेह्यपेयात्मकमभ्यवहरन्नपि भुंजानोऽप्याचरति चेष्टयति-अनुष्ठानं करोति धर्मं चारित्रं । तथैव षड्भिः कारणैः प्रयोजनैस्तु निरवशेषं जुगुप्सन्नपि परित्यजन्नप्याचरति प्रतिपालयति धर्ममिति संबंधः । निष्कारणं यदि भुंक्ते भोज्यादिकं तदा दोषः, कारणैः पुनर्भुंजानोऽपि धर्ममाचरति साधुरिति सम्बन्धः । तथापरैः प्रयोजनैः परित्यजन्नपि भोज्यादिकं धर्ममेवाचरति नाशनपरित्यागे दोषः सकारणत्वात्परित्यागस्येति ॥ ५९ ॥

कानि तानि कारणानि यैर्भुक्तेऽशनमित्याशंकायाम ह—

वेणयवेज्जावच्चे किरियाठाणे य संजमट्ठाए ।
तध पाणधम्मचिंता कुज्जा एदेहिं आहारं ॥६०॥

वेदनावैयावृत्त्ये क्रियार्थं च संयमार्थं ।
तथा प्राणधर्मचिंता कुर्यात् एतैः आहारं ॥ ६० ॥

वेदनां क्षुद्वेदनामुपशमयामीति भुंक्ते । वैयावृत्त्यमात्मनोऽन्येषां च करोमीति वैयावृत्त्यार्थं भुंक्ते । क्रियार्थं षडावश्यकक्रिया मम भोजनमन्तरेण न प्रवर्तते इति ताः प्रतिपालयामी-

[ति भुंक्ते । संयमार्थं त्रयोदशविधं संयमं पालयामीति भुंक्ते, अथवाहारमन्तरेणेन्द्रियाणि मम विकलानि भवन्ति तथा सति जीवदयां कर्तुं न शक्नोमीति प्राणसंयमार्थं इन्द्रियसंयमार्थं च भुंक्ते, तथा प्राणचिन्तया भुंक्ते, प्राणा दशप्रकारास्तिष्ठन्ति ममाहारमन्तरेण, विशेषेणायुर्न तिष्ठतीत्येवं प्राणार्थं भुंक्ते । तथा धर्मचिन्तया भुंक्ते धर्मो दशप्रकारः उत्तमक्षमादिलक्षणो मम वशे न तिष्ठति भोजनमंतरेण, क्षमां मार्दवमार्जवं चेत्यादिकं कर्तुं न शक्नोत्ययं जीवोऽशनमन्तरेणेति भुंक्ते । नातिमात्रं धर्मसंयमयोः पुनरैक्यं क्षमादिभेददर्शनादिति । एभिः षड्भिः कारणैराहारं कुर्याद्यतिरिति सम्बन्धः ॥ ६० ॥

अथ यैः कारणैस्त्यजत्याहारं कानि तानीत्याशंकायामाह—

**आदंके उवसग्गे तिरक्खणे बंभचेरगुत्तीओ ।**
**पाणिदयातवहेऊ सरीरपरिहार वेच्छेदो ॥ ६१ ॥**

**आतंके उपसर्गे तितिक्षायां ब्रह्मचर्यगुप्तेः ।**
**प्राणिदयातपोहेतौ शरीरपरिहारे व्युच्छेदः ॥ ६१ ॥**

आतंके आकस्मिकोत्थितव्याधौ मारणान्तिकपीडायां सहितायां वाहजातायामाहारव्युच्छेदः परित्यागः । तथोपसर्गे दीक्षाविनाशहेतौ देवमानुषतिर्यगचेतनकृते समुपस्थिते भोजनपरित्यागः । तितिक्षणायां ब्रह्मचर्यगुप्तेः सुष्ठु निर्मलीकरणे सप्तमधातुक्षयायाहारव्युच्छेदः । तथा प्राणिदयाहेतौ

यथाहारं गृण्हामि बहुप्राणिनां घातो भवति तस्माद्यथाहारं न गृण्हामीति जीवदयानिमित्तमाहारव्युच्छेदः । तथा तपोहेतौ द्वादशविधे तपस्यनशनं नाम तपस्तदथ करोमीति तपो निमित्तमाहारव्युच्छेदः । तथा शरीरपरिहारे संन्यासकाले जरा मम श्रामण्यहानिकरी, रोगेण च दुःसाध्यतमेन जुष्टः, करणविकलत्वं च मम संजातं स्वाध्यायपक्षतिश्च दृश्यते, जीवितव्यस्य च ममोपायो नास्तीत्येवं कारणे शरीरपरित्यागस्तन्निमित्तो भक्तादिव्युच्छेदः । एतैः षड्भिः कारणैराहारपरित्यागः कार्यः । न पूर्वैः सह विरोधो विषयविभागदर्शनादिति, क्षुद्वेदनादिषु सत्स्वपि आतंकः स्यात्, यदि प्रचुरजीवहत्या वा दृश्यते ततो भोजनादिपरित्यागं, शरीर पीडारहितस्य तपोविधानमिति न विरोधो विषयभेददर्शनादिति । आहारोऽत्रानुवर्तते तेन सह संबंधो व्युच्छेदस्येति ॥

एतदर्थं पुनराहारं न कदाचिदपि कुर्यादिति प्रपंचयन्नाह—

**ण बलाउसाउअट्ठं ण सरीरस्सुवचयट्ठ तेजट्ठं।**
**णाणट्ठ संजमट्ठं झाणट्ठं चेव भुंजेज्जो॥ ६२॥**

**न बलायुःस्वादार्थं न शरीरस्योपचयार्थं तेजोर्थं।**
**ज्ञानार्थं संयमार्थं ध्यानार्थं चैव भुंजीत ॥ ६२ ॥**

न बलार्थं मम बलं युद्धादिसमं भूयादित्येवमर्थं न भुंक्ते नायुरर्थं ममायुर्वृद्धिं यात्विति न भुंक्ते । न स्वादार्थं, शोभ-

नोऽस्य स्वादो भोजनस्येत्येवमर्थं न भुंक्ते । न शरीरस्योपचयार्थं, शरीरं मम पुष्टं मांसवृद्धं वा भवत्विति न भुंक्ते । नापि तेजोऽर्थं, शरीरस्य मम दीप्तिः स्याद्दर्पो वेति न भुंजीताहारमिति । यद्येवमर्थं न भुंक्ते किमर्थं तर्हि भुंक्तेऽत आह-ज्ञानार्थं. ज्ञानं स्वाध्यायो मम प्रवर्ततामिति भुंक्ते । संयमार्थं, संयमो मम स्यादिति भुंक्ते । ध्यानार्थं चैव, आहारमन्तरेण न ध्यानं प्रवर्तते यतो भुंक्ते यतिरिति । तथापि भुंक्ते इत्यत आह ॥ ६२ ॥

णवकोडीपरिसुद्धं असणं बादालदोसपरिहीणं।
संजोजणाय हीणं पमाणसहियं विहिसुदिण्णं ॥

नवकोटिपरिशुद्धं अशनं द्वाचत्वारिंशद्दोषपरिहीनं ।
संयोजनया हीनं प्रमाणसहितं विधिसुदत्तं ॥ ६३ ॥

नवकोटिपरिशुद्धं । कास्ताः कोटयो मनसा कृतकारितानुमतानि तिस्रः कोटयः, तथा वचसा कृतकारितानुमतानि तिस्रः कोटयः, तथा कायेन कृतकारितानुमतानि तिस्रः कोटय एताभिः कोटिभिः परिशुद्धमशनं, द्विचत्वारिंशद्दोषपरिहीणं उद्गमोत्पादैषणादोषरहितं, संयोजनयारहितं, प्रमाणसहितं, विधिना दत्तं प्रतिग्रहोच्चस्थानपादोदकार्चनाप्रणमनमनोवचनकायशुद्ध्यशनशुद्धिभिर्दत्तमुपनीतं, श्रद्धाभक्तितुष्टिविज्ञानालुब्धताक्षमाशक्तियुक्तेन दात्रेति ॥ ६३ ॥ तथा—

**विगदिंगाल विधूमं छक्कारणसंजुदं कमविसुद्धं ।**
**जत्तासाधणमेत्तं चोद्दसमलवज्जिदं भुंजे ॥६४॥**

विगतांगारं विधूमं षट्कारणसंयुक्तं क्रमविशुद्धं ।
यात्रासाधनमात्रं चतुर्दशमलवर्जितं भुंक्ते ॥ ६४ ॥

विगतांगारं, विगतधूमं, षट्कारणसंयुक्तं क्रमविशुद्ध-मुत्क्रमहीनं, यात्रासाधनमात्रं प्राणसंधारणार्थं अथवा मोक्ष-यात्रासाधननिमित्तं, चतुर्दशमलवर्जितं भुंक्ते साधुरिति संबन्धः ॥

अथ कानि चतुर्दशमलानीत्याह—

**णहरोमजंतुअट्ठी—**
**कणकुंडयपूयिचम्मरुहिरमंसाणि**
**वीयफलकंदमूला**
**छिण्णाणि मला चउद्दसा होंति ॥**

नखरोमजंत्वस्थिकणकुंडपूतिचर्मरुधिरमांसानि ।
बीजफलकंदमूलानि छिन्नानि मलानि चतुर्दश भवंति

नखो, हस्तपादाङ्गुल्यग्रभवा (म)ला मनुष्यजाति-प्रतिबद्धतिर्यग्जातिप्रतिबद्धो वा रोमवालः सोऽपि मनुष्यति-र्यग्जातः। जन्तुर्जीवः प्राणिरहितशरीरं। अस्थि कंकालं कणः यवगोधूमादीनां बहिरवयवः। कुंडयादिशाल्यादीना-

मभ्यन्तरसूक्ष्मावयवाः । पूयं, पक्वरुधिरं व्रणक्लेदः चर्मशरीरत्वक्प्रथमधातुः । रुधिरं द्वितीयो धातुः । मांसं रुधिराधारं तृतीयो धातुः । बीजानि प्रा( प्र )रोहयोग्यावयवगोधूमादयः । फलानि जंम्वाम्राम्वाडकफलानि । कंदः कंदलधःप्ररोहकारणं । मूलं ( लघं ) पिप्पलाद्यधःप्ररोहनिमित्तं । छिन्नानि पृथग्भूतानि मलानि चतुर्दश भवन्ति । कानिचिदत्र महामलानि, कानिचिदल्पानि, कानिचिन्महादोषाणि, कानिचिदल्पदोषाणि । रुधिरमांसास्थिचर्मपूयानि महादोषाणि सर्वाहारपरित्यागेऽपि प्रायश्चित्तकारणानि द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियशरीराणि बालाश्चाहारत्यागकारणनिमित्तानि । नखेनाहारः परित्यज्यते । किंचित्प्रायश्चित्तं क्रियते । कणकुंडबीजकंदफलमूलानि परिहारयोग्यानि यदि परिहर्तुं न शक्यन्ते भोजनपरित्यागः क्रियते । तथा स्वशरीरे सिद्धभक्तौ कृतायां यदि रुधिरं पूयं च गलति पारिवेशकशरीरे द्वा तदाहारस्य त्यागः । तद्दिवसेऽस्य मांसस्य पुनर्दर्शनेनाष्टप्रकारायां पिंडशुद्धौ न पठितानीति पृथगुच्यन्ते इति ॥ ६५ ॥

दोषरहितं भुंक्ते यतिरित्युक्ते किं तद्भुंक्ते इत्याशंकायामाह—

**पगदा असओ जह्मा तह्मादो दव्वदोत्ति तं दव्वं।**
**फासुगमिदि सिद्धेवि य**
**अप्पट्ठकदं असुद्धं तु ॥ ६६ ॥**

प्रगता असवो यस्मात् द्रव्यत इति तत् द्रव्यं ।
प्रासुकमिति सिद्धेपि च आत्मार्थकृतं अशुद्धं तु ॥ ६६

द्रव्यभावतः प्रासुकं द्रव्यं भुंक्ते । द्रव्यगतप्रासुकमाह— प्रगता असवः प्राणिनो यस्मात्तस्माद्द्रव्यतः शुद्धमिति तद्द्रव्यं यत्रैकेन्द्रिया जीवा न सन्ति न विद्यन्ते स आहारस्तद्द्रव्यतः शुद्धः, द्वीन्द्रियादयः पुनर्यत्र सजीवा निर्जीवा वा सन्ति स आहारो दूरतः परिवर्जनीयो द्रव्यतोऽशुद्धत्वादिति । प्रासुकमिति अनेन प्रकारेण प्रासुकं सिद्धं निष्पन्नमपि द्रव्यं यद्यात्मार्थं कृतमात्मनिमित्तं कृतं चिन्तयति तदा द्रव्यतः शुद्धमप्यशुद्धमेव ॥ ६६ ॥

कथं परार्थकृतं शुद्धमित्याशंकायां दृष्टान्तेनार्थमाह—

जह मच्छयाण पयदे मदणुदये मच्छया हि मज्जंति
ण हि मंडूगा एवं परमट्ठकदे जदि विसुद्धो ॥ ६७

यथा मत्स्यानां प्रकृते मदनोदके मत्स्या हि मज्जंति ।
न हि मंडूका एवं परमार्थकृते यतिः विशुद्धः ॥ ६७ ॥

यथा मत्स्यानां प्रकृते मदनोदके यथा मत्स्यानां निमित्ते कृते मदनकारणे जले मत्स्या हि स्फुटं माद्यन्ति विह्वलीभवन्ति न हि मण्डूका भेका नैव माद्यन्ति । यस्मिञ्जले

मत्स्यास्तस्मिन्नेव मण्डूका अपि तथापि ते न विपद्यन्ते तद्धे-तोरभावात् । एवं परार्थे कृते भक्षादिके प्रवर्तमानोऽपि यति-र्विशुद्धस्तद्गतेन दोषेण न लिप्यते । कुटुम्बिनोऽधःकर्मादिदो-षेण गृह्यन्ते न साधवः । तेन कुटुम्बिनः साधुदानफलेन त दोषमपास्य स्वर्गगामिनो मोक्षगामिनश्च भवन्ति सम्यग्दृष्टयः, मिथ्यादृष्टयः पुनर्भोगभुवमवाप्नुवंति न दोष इति ॥ ६७ ॥

भावतः शुद्धमाह—

आधाकम्मपरिणदो
फासुगदव्वेवि वंधओ भणिओ ।
सुद्धं गवेसमाणो
आधाकम्मेवि सो सुद्धो ॥ ६८ ॥

अधःकर्मपरिणतः प्रासुकद्रव्येपि बंधको भणितः ।
शुद्धं गवेषयमाणः अधःकर्मण्यपि स शुद्धः ॥ ६८ ॥

प्रासुके द्रव्ये सति यद्यधःकर्मपरिणतो भवति साधु-र्यद्यात्मार्थं कृतं मन्यते गौरवेण तदासौ बन्धको भणितः कर्म बध्नाति शुद्धं पुनर्गवेषयमाणोऽधःकर्मविशुद्ध कृतकारि-तानुमतिरहितं यत्नेन पश्यन्नधःकर्मणि सत्यपि शुद्धोऽसौ यद्यप्यधःकर्मणा निष्पन्नोऽसावाहारस्तथापि साधोर्न बध-हेतुः कृतादिदोषाभावादिति ॥ ६८ ॥

सव्वोवि पिंडदोसो
दव्वे भावे समासदो दुविहो ।
दव्वगदो पुण दव्वे
भावगदो अप्पपरिणामो ॥ ६९ ॥

सर्वः अपि पिंडदोषः द्रव्ये भावे समासतो द्विविधः
द्रव्यगतो पुनः द्रव्ये भावगतो आत्मपरिणामः ६९

सर्वोऽपि पिण्डदोषो द्रव्यगतो भावगतश्च समासतो द्विप्रकारः । द्रव्यमुद्गमादिदोषसहितमप्यधःकर्मणा युक्तं द्रव्यगतमित्युच्यते तस्माद्द्रव्यगतः पुनर्द्रव्यमिति । भावतः पुनरात्मपरिणामः शुद्धमपि द्रव्यं परिणामानामशुद्धयाऽशुद्धमिति तस्माद्भावशुद्धिर्यत्नेन कार्या । भावशुद्धया सर्वं तपश्चरणं ज्ञानदर्शनादिकं च व्यवस्थितमिति ॥ ६९ ॥

द्रव्यस्य भेदमाह—

सव्वेसणं च वि-
द्देसणं च सुद्धासणं च ते कमसो ।
एसणसामिदिविसुद्धं
णिव्वियडमवंजणं जाणं ॥ ७० ॥

सर्वैषणं च विद्वैषणं च शुद्धाशनं च ते क्रमशः ।

एषणासमितिविशुद्धं निर्विकृतमव्यंजनं जानीहि ७०

सर्षपणं चशब्देनासर्षपणं, विद्वेषणं चशब्देनाविद्वेषणं शुद्धाशनं चशब्देनाशुद्धाशनं च ग्राह्यं । एषणासमितिविशुद्धं सर्षपणमित्युच्यते । तथा विकृतेः पंचरसेभ्यो निष्क्रान्तं निर्विकृतं गुडतैलघृतदधिदुग्धशाकादिरहितं सौवीरशुष्कतक्रादिसमन्वितं विद्वेषणमित्युच्यते । तथा सौवीरशुष्कतक्रादिभिर्वर्जितमव्यञ्जनं पाकादवतीर्णरूपं मनागप्यन्यथा न कृतं शुद्धाशनमिति क्रमशो यथानुक्रमेण जानीहि । एतत्त्रिविधं द्रव्यमशनयोग्यं । अपवाशिनं सर्वरससमन्वितं सर्वव्यञ्जनैश्च सहितं कादाचिद्योग्यं कादाचिदयोग्यमिति । एवमनेन न्यायेनैषणासमितिर्व्याख्याता भवति ॥ ७० ॥

तां कथं कुर्यादित्याशंकायामाह—

दव्वं खेत्तं कालं
भावं बलवीरियं च णाऊण ।
कुज्जा एषणसमिदिं
जहोवदिट्ठं जिणमदम्मि ॥ ७१ ॥

द्रव्यं क्षेत्रं कालं भावं बलवीर्यं च ज्ञात्वा ।
कुर्यात् एषणासमितिं यथोपदिष्टां जिनमते ॥ ७१ ॥

द्रव्यमाहारादिकं ज्ञात्वा, तथक्षेत्रं जांगलानूपरूक्ष-

स्निग्धादिकं ज्ञात्वा, तथा कालं शीतोष्णवर्षादिकं ज्ञात्वा तथा भावमात्मपरिणामं श्रद्धामुत्साहं ज्ञात्वा, तथा शरीरबलमात्मनो ज्ञात्वा, तथात्मनो वीर्यं संहननं ज्ञात्वा कुर्यादशनसमितिं जिनागमे यथोपदिष्टामिति। अन्यथा यदि कुर्याद्वातःपित्तश्लेष्मादिसमुद्भवः स्यादिति ॥ ७२ ॥

भोजनविभागपरिणाममाह—

अद्धमसणस्स सव्विं-
जणस्स उदरस्स तदियमुदयेण ।
वाऊ संचरणट्ठं
चउत्थमवसेसये भिक्खू ॥ ७२ ॥

अर्धं अशनेन सव्यंजनेन उदरस्य तृतीयं उदकेन ।
वायोः संचरणार्थं चतुर्थमवशेषयेत् भिक्षुः ॥ ७२ ॥

उदरस्यार्धं सव्यञ्जनेनाशनेन पूरयेत्तृतीयभागं चोदरस्योदकेन पूरयेद्वायोः संचरणार्थं चतुर्थभागमुदरस्यावशेषयेद्भिक्षुः। चतुर्थभागमुदरस्य तुच्छं कुर्यात्तेन षडावश्यकक्रियाः सुखेन प्रवर्तंते, ध्यानाध्ययनादिकं च न हीयते, अजीर्णादिकं च न भवेदिति ॥ ७२ ॥

भोजनयोग्यकालमाह—

सूरुदयत्थमणादो

णालीतिय वज्जिदे असणकाले।
तिगदुगएगमुहुत्ते
जहण्णमज्झिम्ममुक्कस्से ॥ ७३ ॥

सूर्योदयास्तमनयोर्नाडीत्रिकवर्जितयोः अशनकाले
त्रिकद्विकैकमुहूर्ताः जघन्यमध्यमोत्कृष्टाः ॥ ७३ ॥

सूर्योदयास्तमनयोर्नाडीत्रिकवर्जितयोर्मध्येऽशनकालः । तस्मिन्नशनकाले त्रिषु मुहूर्तेषु भोजनं जघन्याचरणं द्वयोर्मुहूर्तयोरशनं मध्यमाचरणं एकस्मिन् मुहूर्तेऽशनमुत्कृष्टाचरणमिति सिद्धिभक्तौ कृतायां परिणाममेतन्न भिक्षामलभमानस्य पर्यटत इति ॥ ७३ ॥

भिक्षार्थं प्रविष्टो मुनिः किं कुर्वन्नाचरतीत्याह—

भिक्खा चरियाए पुण गुत्तीगुणसीलसंजमादीणं
रक्खंतो चरदि मुणी णिव्वेदतिगं च पेच्छंतो ७४

भिक्षाचर्यायां पुनः गुप्तिगुणशीलसंयमादीनां ।
रक्षन् चरति मुनिर्निर्वेदत्रिकं च प्रेक्ष्यमाणः ॥ ७४॥

भिक्षाचर्यायां प्रविष्टो मुनिर्मनोगुप्तिं वचनगुप्तिं कायगुप्तिं रक्षंश्चरति । गुणान् मूलगुणान् रक्षंश्चरति । तथा शीलसंयमादींश्च रक्षंश्चरति । निर्वेदत्रिकं चापेक्ष्यमाणः शरीरवैराग्यं संगवैराग्यं संसारवैराग्यं चापेक्ष्यमाण इत्यर्थः । तथा—

**आणा अणवत्थावि य मिच्छत्ताराहणादणासो य**
**संजमविराघणावि य चरियाए परिहरेदव्वा ७५**

आज्ञा अनवस्थापि च मिथ्यात्वाराधनात्मनाशश्च ।
संयमविराधनापि च चर्यायां परिहर्तव्याः ॥ ७५ ॥

आणा -आज्ञा वीतरागशासनं रक्षयन् पालयंश्चरतीति सम्बन्धः । एतांश्च परिहरंश्चरति अनवस्था स्वेच्छाप्रवृत्तिरपि च, मिथ्यात्वाराधनं सम्यक्त्वप्रतिकूलाचरणं, आत्मनाशः स्वप्रतिघातः, सयमविराधना चापि चर्यायां परिहर्तव्याः । भिक्षाचर्यायां प्रविष्टो मुनिरनवस्था यथा भवति तथा चरति मिथ्यात्वाराधनात्मनाशः संयमविराधनाश्च यथा न भवन्तीति तथान्तरायाइव परिहरश्चरति ॥ ७५ ॥

केतेऽन्तराया इत्याशंक्याह—

**कागा मेज्झा छद्दी रोहण रुहिरं च अस्सुवादं च ।**
**जण्हूहिट्ठामरिसं जण्हुवारे वदिकमो चेव ॥ ७६ ॥**

काकोऽमेध्यं छर्दिः रोधनं रुधिरं चाश्रुपातश्च ।
जान्वधः आमर्शः जानूपरि व्यतिक्रमश्चैव ॥ ७६ ॥

काक उपलक्षणार्थो गृहीतस्तेन काकवकश्येनादयः परिगृह्यन्ते । गच्छतः स्थितस्य वा काकादयो यदुपरि व्युत्सर्गं कुर्वन्ति तदपि काक इत्युच्यते साहचर्यात् काको नाम भोज-

नस्यान्तरायः । तथाऽमेध्यमशुचि, तेन पादादिकं यल्लिप्तं तदप्यमेध्यमिति साहचर्यात्, अमेध्य नामान्तरायः । तथा छर्दिर्वमनमात्मनो यदि भवति । तथा रोधनं यदि कश्चिद्ग्रहणादिकं करोति । तथा रुधिरमात्मनोऽन्यस्य वा यदि पश्यति । चशब्देन पूयादिकं च ग्राह्यं । तथाऽश्रुपातो दुःखेनात्मनो यद्यश्रूण्यागच्छन्ति परेषामपि सन्निकृष्टानां यद्ययं दोषो भवेत् । तथा जान्वधः आमर्शो जान्वधः परामर्शः । तथा जानूपरि व्यतिक्रमश्चैव । सर्वत्रान्तरायेण सम्बन्ध इति । तथा-

**णाभिअधोणिग्गमणं पच्चक्खियसेवणा य जंतुवहो।**
**कागादिपिंडहरणं पाणीदो पिंडपडणं च ॥ ७७॥**

**नाभ्यधोनिर्गमनं प्रत्याख्यातसेवना च जंतुवधः ।**
**काकादिपिंडहरणं पाणितः पिंडपतनं च ॥ ७७ ॥**

नाभ्यधो निर्गमनं नाभेरधो मस्तकं कृत्वा यदि निर्गमनं भवेत् । तथा प्रत्याख्यातस्य सेवना च, अवग्रहो यस्य वस्तुनस्तस्य यदि भक्षणं स्यात् । तथा जन्तुवधः आत्मनोऽन्येन वा पुरतो जीववधो यदि क्रियते । तथा काकादिभिः पिंडहरणं यदि काकादयः पिण्डमपहरन्ति । तथा पाणिपात्रात्पिण्डपतनं भुंजानस्य पाणिपुटाद्यदि पिण्डो ग्रासमात्रं वा पतति ॥ ७७ ॥ तथा-

**पाणीए जंतुवहो मंसादीदंसणे य उवसग्गो ।**

पादंतरम्मि जीवो संपादो भायणाणं च॥ ७८ ॥
पाणौ जंतुवधः मांसादिदर्शनं च उपसर्गः ।
पादांतरे जीवसंपातो भाजनानां च ॥ ७८ ॥

पणिपात्रे जन्तुवधो जन्तुरागत्य पाणौ भुंजानस्य यदि म्रियते । तथा मांसादिदर्शनं मांसं मृतपंचेन्द्रियशरीरं इत्येवमादीनां दर्शनं यदि स्यात् । तथोपसर्गो देविकाद्युप- सर्गो यदि स्यात् । तथा पादान्तरे पंचेन्द्रियजीवो यदि गच्छेत् । तथा सम्पातो भाजनस्य परिवेषकहस्ताद्भाजनं यदि पतेत् ॥ ७८ ॥ तथा—

उच्चारं पस्सवणं अभोजगेहपवेसणं तहा पडण ।
उववेसणं सदंसं भूमीसंफास णिट्ठुवणं ॥ ७९ ॥
उच्चारः प्रस्रवणं अभोज्यगृहप्रवेशनं तथा पतनं ।
उपवेशनं सदंशः भूमिसंस्पर्शः निष्ठीवनं ॥ ७९ ॥

उच्चार आत्मनो यद्युदरमलच्युतिः स्यात् । तथात्मनः प्रस्रवणं मूत्रादिकं यदि स्यात् । तथा पर्यटतोऽभोजनगृहप्र- वेशो यदि भवेत् चंडालादिगृहप्रवेशो यदि स्यात् । तथा पतनमात्मनो मूर्च्छादिना यदि पतनं भवेत् । तथोपवेशनं यद्युपविष्टो भवेत् । तथा सदंशः सह दंशेन वर्तते इति सदंशः श्वादिभिर्यदि दष्टः स्यात् । तथा भूमिसंस्पर्शः सिद्धभक्तौ

कृताया हस्तेन भूमिं यदि स्पृशेत्। तथा निष्ठीवनं स्वेन यदि श्लेष्मादिकं क्षिपेत् ॥ ७९ ॥ तथा—

**उदरकिमिणिग्गमणं अदत्तगहणं पहारगामडाहो पादेण किंचि गहणं करेण वा जं च भूमीए ८०**

**उदरकृमिनिर्गमनं अदत्तग्रहणं प्रहारो ग्रामदाहश्च। पादेन किंचिद्ग्रहणं करेण वा यच्च भूमौ ॥ ८० ॥**

उदराद्यदि कृमिनिर्गमनं भवेत्। तथा अदत्तग्रहणमदत्तं यदि किंचिद् गृह्णीयात्। तथा प्रहार आत्मनोऽन्यस्य वा खड्गादिभिर्यदि प्रहारः स्यात्। तथा ग्रामदाहो यदि स्यात्। तथा पादेन यदि किंचिद् गृह्यते। तथा करेण वा यदि किंचिद्गृह्यते भूमेरिति सर्वत्राशनस्यान्तरायो भवतीति सम्बन्धः। ॥ ८० ॥ तथा—

**एदे अण्णे बहुगा कारणभूदा अभोयणस्सेह। बीहणलोगदुगंछणसंजमणिव्वेदणट्ठं च ॥ ८१ ॥**

**एतेऽन्ये बहवः कारणभूता अभोजनस्येह। भयलोकजुगुप्सासंयमनिर्वेदनार्थं च ॥ ८१ ॥**

एते पूर्वोक्ताः काकादयोऽन्तरायाः कारणभूता भोजनपरित्यागस्य द्वात्रिंशत्। तथान्ये च बहवश्चंडालादिस्पर्शककलहेष्टमरणसाधर्मिकसन्न्यासपतनप्रधानमरणादयोऽशनपरित्याग-

हेतवः । भयलोकजुगुप्सायां संयमनिर्वेदनार्थं च यदि किंचित्स्यात् भयं राज्ञः स्यात्, तथा लोकजुगुप्सा च यदि स्यात् तयाऽप्याहारत्यागः । संयमार्थं चाहारत्यागो निर्वेदनार्थं चेति ॥ ८१ ॥

पिण्डशुद्धिमुपसंहरन्नाह—

जेणेह पिंडसुद्धी उवदिट्ठा जेहि धारिदा सम्मं ।
ते वीरसाधुवग्गा तिरदणसुद्धिं मम दिसंतु ॥ ८२

येरिह पिंडशुद्धिः उपदिष्टा यैः धारिता सम्यक् ।
ते वीरसाधुवर्गाः त्रिरत्नशुद्धिं मम दिशंतु ॥ ८२

सूत्रकारः फलार्थी प्राह–यैरिह पिण्डशुद्धिरुपदिष्टा यैश्च धारिता सेविता सम्यग्विधानेन ते वीरसाधुवर्गास्त्रिरत्नशुद्धिं मम दिशन्तु प्रयच्छन्तु ॥ ८२ ॥

इत्याचारवृत्तौ वसुनन्दिविरचितायां पिण्डशुद्धिर्नाम षष्ठः प्रस्तावः ॥ ६ ॥



## षडावश्यकाधिकारः ॥ ७ ॥



मायेव जायते पुंसां वीतरागस्य दर्शनम् ।
तद्दर्शनविरक्तानां भवेज्जन्मापि निष्फलम् ॥ १ ॥

षडावश्यकक्रियं मूलगुणान्तर्गतमधिकारं प्रपंचेन वि-
वृण्वन् प्रथमतरं तावन्नमस्कारमाह—

**काऊण णमोक्कारं अरहंताणं तहेव सिद्धाणं ।**
**आइरियउवज्झाए लोगम्मि य सव्वसाहूणं ॥**
**कृत्वा नमस्कारं अर्हतां तथैव सिद्धानां ।**
**आचार्योपाध्यायानां लोके च सर्वसाधूनाम् ॥ १ ॥**

कृत्वा नमस्कारं, केषामर्हतां तथैव सिद्धानां, आचार्यो-
पाध्यायानां च. लोके च सर्वसाधूनां । लोकशब्दः प्रत्येक-
मभिसम्बध्यते । कारशब्दो येन तेन षष्ठी संजाताऽन्यथा
पुनश्चतुर्थी भवति । अर्हत्सिद्धाचार्योपाध्यायसाधुभ्यो लोके
ऽस्मिन्नमस्कृत्वा आवश्यकनिर्युक्तिं वक्ष्ये इति सम्बन्धः सा-
पेक्षत्वात् क्त्वान्तप्रयोगस्येति ॥ १ ॥

नमस्कारपूर्वकं प्रयोजनमाह—

**आवासयाणिज्जुत्ती वोच्छामि जहाकमं समासेण**

## आयरिपरंपराए जहागदा आणुपुव्वीए ॥२॥

आवश्यकनिर्युक्तिं वक्ष्ये यथाक्रमं समासेन ।
आचार्यपरंपरया यथागतानुपूर्व्या ॥

आवश्यकनिर्युक्तिं वक्ष्ये । यथाक्रमं क्रममनतिलंघ्य परिपाट्या । समासेन संक्षेपतः । आचार्यपरंपरया यथागतानुपूर्व्या । येन क्रमेणागता पूर्वाचार्यप्रवाहेण संक्षेपतोऽहमपि तेनैव क्रमेण पूर्वागमक्रमं चापरित्यज्य वक्ष्ये कथयिष्यामीति ॥ २ ॥

तावत्पंचनमस्कारनिर्युक्तिमाह—

## रागद्दोसकसाए य इंदियाणि य पंच य ।
## परिसहे उवसग्गे णासयंतो णमोरिहा ॥ ३ ॥

रागद्वेषकषायांश्च इंद्रियाणि च पंच च ।
परीषहान् उपसर्गान् नाशयद्भ्यो नमः अर्हद्भ्यः ॥३॥

रागः स्नेहो रतिरूपः । द्वेषोऽप्रीतिररतिरूपः । कषायाः क्रोधादयः । इन्द्रियाणि चक्षुरादीनि पंच । परीषहाः क्षुदादयो द्वाविंशतिः । उपसर्गा देवादिकृतसंक्लेशाः । तान् रागद्वेषकषायेन्द्रियपरीषहोपसर्गान् सर्वान् कृतकृत्यत्वाद्भस्मीभूतानि नाशयद्भ्यो विनाशयद्भ्योऽर्हद्भ्यो नम इति ॥ ३ ॥

अथार्हन्तः कथा निरुक्त्या उच्यन्त इत्याह—

**अरिहंति णमोक्कारं**
**अरिहा पूजा सुरुत्तमा लोए।**
**रजहंता अरिहंति य**
**अरहंतो तेण उच्चंदे ॥ ४ ॥**

अर्हंति नमस्कारं अर्हाः पूजायाः सुरोत्तमा लोके।
रजोहंतारः अरिहंतारश्च अर्हंतस्तेन उच्यंते ॥ ४ ॥

नमस्कारमर्हन्ति नमस्कारयोग्याः । पूजाया अर्हा योग्याः । लोके सुराणामुत्तमाः प्रधानाः । रजसो ज्ञानदर्शनावरणयोर्हन्तारः । अरेर्मोहस्यान्तरायस्य च हन्तारोऽपनेतारो यस्मात्तस्मादर्हन्त इत्युच्यन्ते । येनेह कारणेनेत्थम्भूतास्तेनार्हन्तः सर्वज्ञाः सर्वलोकनाथा लोकेऽस्मिन्नुच्यन्ते ॥ ४ ॥
अतः किं ?

**अरहंतणमोक्कारं**
**भावेण य जो करेदि पयदमदी।**
**सो सव्वदुक्खमोक्खं**
**पावदि अचिरेण कालेण ॥ ५॥**

अर्हन्नमस्कारं भावेन च यः करोति प्रयत्नमतिः ।
स सर्वदुःखमोक्षं प्राप्नोति अचिरेण कालेन ॥ ५ ॥

इत्थंभूतानामर्हतां नमस्कारं यः करोति भावेन प्रयत्नमतिः स सर्वदुःखमोक्षं प्राप्नोत्यचिरेण कालेनेति ॥ ५ ॥

दीहकालमयं जंतू उसिदो अट्ठकम्महिं ।
सिदे धत्ते णिधत्ते य सिद्धत्तमुवगच्छइ ॥ ६ ॥

दीर्घकालमयं जंतुः उषितः अष्टकर्मसु ।
सिते ध्वस्ते निधत्ते च सिद्धत्वमुपगच्छति ॥ ६ ॥

श्लोकोऽयं । दीर्घकालमनादिसंसारं अयं जन्तुर्जीवः । उषितः स्थितः अष्टसु कर्मसु ज्ञानावरणादिभिः कर्मभिः परिवेष्टितोऽयं जीवः परिणतः स्थितः । सिते कर्मबन्धे निधत्ते । निधत्ते परप्रकृतिसंक्रमोदयोदीरणोत्कर्षापकर्षणरहिते ध्वस्ते प्रणाशमुपगते । सिद्धत्वमुपगच्छति । निर्धते बन्धे ध्वस्ते सत्ययं जन्तुर्यद्यपि दीर्घकालं कर्मसु व्यवस्थितस्तथापि सिद्धो भवति सम्यग्ज्ञानाद्यनुष्ठानेनेति ॥ ६ ॥

तथोपायमाह—

आवेसणी सरीरे
इंदियभंडो मणो व आगारिओ ।

धमिदव्व जीवलोहे
वावीसपरीसहग्गीहिं ॥ ७ ॥

आवेशनी शरीरं इंद्रियभांडानि मनो वा आकरी ।
ध्मातव्यं जीवलोहं द्वाविंशतिपरीषहाग्निभिः ॥ ७ ॥

आवेसनी चुल्ली यत्रागारणि क्रियते । शरीरे किंविशिष्टे, आवेशनीभूते । इन्द्रियाण्येव भाण्डमुपस्कारभूतं सदंशकाभीरणी हस्तकूच्चन दिक । मनस्त्वाकरी चेता उपाध्यायो लोहकारः । ध्मातव्यं दाह्य निर्मलीकर्तव्यं । जीवलोह जीवधातुः । द्वाविंशतिपरीषहाग्निना । एवं द्वाविंशतिपरीषहाग्निना कर्मबन्धे ध्वस्ते चुल्लीकृतं शरीरं त्यक्त्वेन्द्रियाणि चोपकरणभूतानि परित्यज्य निर्मलीभूतं जीवसुवर्णं गृहीत्वा मनः केवलज्ञानमाश्री सिद्धत्वमुपगच्छति सिद्धो भवतीति सम्बन्धः । तस्मात् सिद्धत्वयुक्तानां सिद्धानां नमस्कारं भावेन यः करोति प्रयत्नमतिः ( स ) सर्वदुःखमोक्षं प्राप्नोत्यचिरेण कालेनेति ॥ ७ ॥

आचार्यस्य निरुक्तिमाह—

सदा आयारविद्दण्हू सदा आयरियं चरे ।
आयारमायारवंतो आयरिओ तेण उच्चदे ॥८॥

सदा आचारवित् सदा आचरितं चरः ।

आचारमाचारयन् आचार्यः तेन उच्यते ॥ ८ ॥

श्लोकोऽयं। सदा सर्वकालं आचारं वेत्तीति सदाचारवित् रात्रौ दिने वाचारस्य परमार्थसंवेदनं यत्नेन युक्तोऽथवा सदाचारः शोभनाचारः सम्यग्ज्ञानवांश्च सदा सर्वकालमाचरितं चर आचरितं गणधरादिरभिप्रेतं चेष्टितं चरतीति वा चरितं चरोऽथवा चरणीयं श्रामण्ययोग्य दीक्षाकालं च शिक्षाकालं च चरितवानिति कृतकृत्य इत्यर्थः। आचारयन्यान साधूनाचारयन् हि यस्मात् प्रभासते तस्मादाचार्य इत्युच्यते ॥ ८ ॥ तथा

जम्हा पंचविहाचारं आचरंतो पभासदि।
आयरियाणि देसंतो आयरिओ तेण वुच्चदे ॥९॥

यस्मात् पंचविधाचारं आचरन् प्रभासते।
आचरितानि दर्शयन् आचार्यः तेन उच्यते ॥ ९ ॥

श्लोकोऽयं। पंचविधमाचारं दर्शनाचारादिपंचप्रकारमाचारं चेष्टयन्। प्रभासते शोभते। आचरितानि स्वानुष्ठानानि दर्शयन् प्रभासते आचार्यस्तेन कारणेनोच्यते इति। एवं विधस्याचार्यस्य यो नमस्कारं करोति स सर्वदुःखमोक्षं प्राप्नोत्यचिरेण कालेनेति ॥ ९ ॥

उपाध्यायनिरुक्तिमाह—

बारसंगे जिणक्खादं सज्झायं कथितं बुधे ।
उवदेसइ सज्झायं तेणुवज्झाउ उच्चदि ॥ १० ॥
द्वादशांगानि जिनाख्यातानि स्वाध्यायः कथितो बुधैः
उपदिशति स्वाध्यायं तेनोपाध्याय उच्यते ॥ १० ॥

द्वादशांगानि जिनाख्यातानि जिनैः प्रतिपादितानि स्वाध्याय इति कथितो बुधैः पंडितैस्तं स्वाध्यायं द्वादशाङ्गचतुर्दशपूर्वरूपं यस्मादुपदिशति प्रतिपादयति तेनोपाध्याय इत्युच्यते । तस्योपाध्यायस्य नमस्कारं यः करोति प्रयत्नमतिः स सर्वदुःखमोक्षं प्राप्नोत्यचिरेण कालेनेति ॥ १० ॥

साधूनां निरुक्तितो नमस्कारमाह—

णिव्वाणसाधए जोगे सदा जुंजंति साधवो ।
समा सव्वेसु भुदेसु तह्मा ते सव्वसाधवो ॥ ११ ॥
निर्वाणसाधकान् योगान् सदा युंजंति साधवः ।
समाः सर्वेषु भूतेषु तस्मात् ते सर्वसाधवः ॥ ११ ॥

यस्मान्निर्वाणसाधकान् योगान् मोक्षप्रापकान् मूलगुणादितपोऽनुष्ठानानि सदा सर्वकालं रात्रिंदिवं युंजन्ति तैरात्मानं योजयन्ति साधवः साधुचरितानि । यस्माच्च समाः समत्वमापन्नाः सर्वभूतेषु सकलजीवेषु तस्मात्कारणाच्च सर्वसाधव इत्युच्यन्ते । तेषां सर्वसाधूनां नमस्कारं भावेन यः करो-

वि भयत्नमतिः स सर्वदुःखमोक्षं करोत्यचिरेण कालेनेति ॥

पंचनमस्कारमुपसंहरन्नाह—

**एवंगुणजुत्ताणं पंचगुरूणं विसुद्धकरणेहिं।**
**जो कुणदि णमोकारं सो पावदि णिव्वुदिं सिग्घं**

एवं गुणयुक्तानां पंचगुरूणां विशुद्धकरणैः।
यः करोति नमस्कारं स प्राप्नोति निर्वृतिं शीघ्रं ॥१२॥

एवं गुणयुक्तानां पंचगुरूणां पंचपरमेष्ठिनां सुनिर्मल-मनोवाक्कायैर्यः करोति नमस्कारं स प्राप्नोति निर्वृतिं सिद्धिसुखं शीघ्रं। न पौनरुक्त्यं, द्रव्यार्थिकपर्यायार्थिकयोरुभयोरपि संग्रहार्थत्वादिति ॥ १२ ॥

किमर्थं पंचनमस्कारः क्रियत इति चेदित्याह—

**एसो पंच णमोयारो सव्वपावपणासणो।**
**मंगलेसु य सव्वेसु पढमं हवदि मंगलं॥ १३ ॥**

एषः पंचनमस्कारः सर्वपापप्रणाशकः।
मंगलेषु च सर्वेषु प्रथमं भवति मंगलं ॥ १३ ॥

एष पंचनमस्कारः सर्वपापप्रणाशकः सर्वविघ्नविनाशकः मलं पापं गालयन्तीति विनाशयन्ति, मंगं सुखं लान्त्याददतीति वा मंगलानीति तेषु मंगलेषु द्रव्यमंगलेषु भावमंगलेषु

सर्वेषु प्रथमं भवति मंगलं यस्मात्तस्मात् सर्वशास्त्रादौ मगलं क्रियत इति ॥ १३ ॥

पंचनमस्कारनिरुक्तिमाख्यायावश्यकनियुक्तेर्निरुक्तिमाह—

ण वसो अवसो अवस-
रसकम्मगावासयंति बोधव्वा ।
जुत्तित्ति उवायात्ति य
णिरवयवा होदि णिज्जुत्ती ॥१४॥

न वशः अवशः अवशस्य कर्म आवश्यकमिति बोद्धव्यं
युक्तिरिति उपाय इति च निरवयवः भवति निर्युक्तिः

न वश्यः पाप दैरवश्यो यदेन्द्रियकषायेपकषायरागद्वेषादिभिरनात्मीयकृतस्तस्यावश्यकस्य यत्कर्मानुष्ठानं तदावश्यकमिति बोद्धव्यं ज्ञातव्य । युक्तिरिति उपाय इति चैकार्थः । निरवयवा सम्पूर्णाऽखण्डिता भवति निर्युक्तिः । आवश्यकानां निर्युक्तिरावश्यकनियुक्तिरावश्यकसंपूर्णोपायः अहोरात्रमध्ये साधूना यदाचरणं तस्यावबोधकं पृथक्पृथक् स्तुतिस्वरूपेण "जयति भगवानित्यादि" प्रतिपादकं यत्पूर्वापराविरुद्ध शास्त्रं न्याय आवश्यक निर्युक्तिरित्युच्यते । सा च षट्प्रकारा भवति ॥ १४ ॥

तस्य ( स्या ) भेदान् प्रतिपादयन्नाह—

**सामाइय चउवीसत्थव वंदणयं पडिकमणं ।**
**पच्चक्खाणं च तहा काओसग्गो हवदि छट्ठो १५**

सामायिकं चतुर्विंशस्तवः वंदना प्रतिक्रमणं ।
प्रत्याख्यानं च तथा कायोत्सर्गो भवति षष्ठः ॥१५॥

समः सर्वेषां समानो यो सर्गः पुण्यं वा समायस्तस्मिन् भवं, तदेव प्रयोजनं पुण्यं तेन दीव्यतीति वा सामायिकं समये भवं वा सामायिकं । चतुर्विंशतिस्तवः चतुर्विंशतितीर्थंकराणां स्तवः स्तुतिः । वन्दना सामान्यरूपेण स्तुतिर्जयति भगवानित्यादि, पंचगुरुभक्तिपर्यन्ता पंचपरमेष्ठिविषयनमस्कारकरणं वा शुद्धभावेन । प्रतिक्रमणं व्यतिक्रान्तदोषनिर्हरणं व्रतादुच्चारणं च । प्रत्याख्यानं भविष्यत्कालविषयवस्तुपरित्यागश्च । तथा कायोत्सर्गो भवति षष्ठः । सामायिकावश्यकनिर्युक्तिः, चतुर्विंशतिस्तवावश्यकनिर्युक्तिः, वन्दनानिर्युक्तिः, प्रतिक्रमणनिर्युक्तिः, प्रत्याख्यानावश्यकनिर्युक्तिः, कायोत्सर्गावश्यकनिर्युक्तिरिति ॥ १५ ॥

तत्र सामायिकनामावश्यकनिर्युक्तिं वक्तुकामः प्राह—

**सामाइयणिज्जुत्ती वोच्छामि जहाकमं समासेण**
**आयरियपरंपराए जहागदं आणुपुव्वीए ॥१६॥**

सामायिकनिर्युक्तिं वक्ष्ये यथाक्रमं समासेन ।
आचार्यपरंपरया यथागतं आनुपूर्व्या ॥ १६ ॥

सामायिकनिर्युक्तिं सामायिकनिरवयवोपायं वक्ष्ये यथाक्रमं समासेनाचार्यपरंपरया यथागतमानुपूर्व्या । अधिकारक्रमेण पूर्वं यथानुक्रमं सामायिककथनविशेषणं पाश्चात्यानुपूर्वीग्रहणं, यथागतविशेषणमिति कृत्वा न पुनरुक्तदोषः ।

सामायिकनिर्युक्तिरपि षट्प्रकारा तामाह—

णामट्ठवणा दव्वे खेत्ते काले तहेव भावे य ।
सामाइयह्मि एसो णिक्खेओ छव्विओ णेओ १७

नाम स्थापना द्रव्यं क्षेत्रं कालस्तथैव भावश्च ।
सामायिके एषः निक्षेपः षड्विधो ज्ञेयः ॥ १७ ॥

अथवा निक्षेपविरहितं शास्त्रं व्याख्यायमानं वक्तुः श्रोतुश्चोत्पथोत्थानं कुर्यादिति सामायिकनिर्युक्तिनिक्षेपो वर्ण्यते—नामसामायिकनिर्युक्तिः, स्थापनासामायिकनिर्युक्तिः, द्रव्यसामायिकनिर्युक्तिः, क्षेत्रसामायिकनिर्युक्तिः, कालसामायिकनिर्युक्तिः, भावसामायिकनिर्युक्तिः, । नामस्थापनाद्रव्यक्षेत्रकालभावभेदेन सामायिके एष निक्षेप उपायः षट्प्रकारो भवति ज्ञातव्यः । शुभनामान्यशुभनामानि च श्रुत्वा रागद्वेषादिवर्जनं नामसामायिकं नाम । काश्चन स्थाप-

न्ता: सुस्थिताः सुप्रमाणाः सर्वावयवसम्पूर्णाः सद्भावरूपा मन आल्हादकारिण्यः काश्चन पुनः स्थापना दुस्थिताः प्रमाणरहिताः सर्वावयवैरसम्पूर्णाः सद्भावरहितास्तास्ता (सु) उपरि रागद्वेषयोरभावः स्थापनासामायिकं नाम । सुवर्णरजतमुक्ताफलमाणिक्यादिमृत्तिकाराष्ठलोष्टकंटकादिषु समदर्शनं रागद्वेषयोरभावो द्रव्यसामायिक नाम । कानिचित् क्षेत्राणि रम्याणि आरामनगरनदीकूपवापीतडागजनपदोपचितानि, कानिचिच्च क्षेत्राणि रूक्षकटकविषमविरसास्थिपाषाणसहितानि जीर्णाटवीशुष्कनदीमरुसिकतापुंजादिरागद्रुत्यानि तेषूपरि रागद्वेषयोरभावः क्षेत्रसामायिकं नाम । प्रावृड्वर्षाहेमन्तशिशिरवसन्तनिदाघाः षड्ऋतवो रात्रिदिवसशुक्लपक्षकृष्णपक्षाः कालस्तेषूपरि रागद्वेषवर्जन कालसामायिक नाम । सर्वजीवेषूपरि मैत्रीभावोऽशुभपरिणामवर्जनं भावसामायिकं नाम । अथवा जातिद्रव्यगुणक्रियानिरपेक्ष सञ्ज्ञाकरणं सामायिकशब्दमात्र नामसामायिकं नाम । सामायिकावश्यकेन परिणतस्याकृतिमत्यनाकृतिमति च वस्तुनि गुणारोपणं स्थापनासामायिकं नाम । द्रव्यसामायिकं द्विविधं आगमद्रव्यसामायिकं नोआगमद्रव्यसामायिकं चेति । सामायिकवर्णनप्राभृतज्ञायी अनुपयुक्त आगमद्रव्यसामायिक नाम । नोआगमद्रव्यसामायिकं त्रिविधं सामायिकवर्णनप्राभृतज्ञायकशरीरसामायिकप्राभृतभविष्यज्ज्ञायकजीवतद्व्यतिरिक्तभेदेन । ज्ञायकशरीरमिति त्रिविधं

भूतवर्तमानभविष्यद्भेदेन । भूतमपि त्रिविधं च्युतच्यावितत्यक्तभेदेन । सामायिकपरिणतजीवाधिष्ठितं क्षेत्रं क्षेत्रसामायिकं नाम । यस्मिन् काले सामायिकं करोति स कालः पूर्वाह्णादिभेदभिन्नः कालसामायिकं। भावसामायिकं द्विविधं, आगमभावसामायिकं, नोआगमभावसामायिकं चेति । सामायिकवर्णनप्राभृतज्ञाय्युपयुक्तो जीव आगमभावसामायिकं नाम, सामायिकपरिणतपरिणामादि नोआगमभावसामायिकं नाम । तयोर्मध्ये आगमभावसामायिकेन नोआगमभावसामायिकेन च प्रयोजनमिति ॥ १७ ॥

निरुक्तिपूर्वकं भावसामायिकं प्रतिपादयन्नाह—

**सम्मत्तणाणसंजमतवेहिं जं तं पसत्थसमगमणं ।**
**समयंतु तं तु भणिदं तमेव सामाइयं जाणं॥१८॥**

सम्यक्त्वज्ञानसंयमतपोभिः यत्तत् प्रशस्तसमागमनं
समयस्तु स तु भणितस्तमेव सामायिकं जानीहि १८

सम्यक्त्वज्ञानसंयमतपोभिर्यत्तत् प्रशस्तं समागमनं प्राप्तं तैः सहैक्यं च जीवस्य यत् समयस्तु समय एव भणितस्तमेव सामायिकं जानीहि ॥ १८ ॥ तथा यः—

**जिदउवसग्गपरीसह**
**उवजुत्तो भावणासु समिदीसु ।**

जमणियमउज्जदमदी
सामाइयपरिणदो जीवो ॥ १९॥

जितोपसर्गपरीषह उपयुक्तः भावनासु समितिषु ।
यमनियमोद्यतमतिः सामायिकपरिणतो जीवः १९

जिताः सोढा उपसर्गाः परीषहाश्च येन स जितोपसर्गपरीषहः समितिषु भावनासु चोपयुक्तो यः यमनियमोद्यतमतिश्च यः, स सामायिकपरिणतो जीव इति ॥१९॥ तथा—

जं च समो अप्पाणं परे य मादूय सव्वमहिलासु ।
अप्पियपियमाणादिसु तो समणो तो य सामइयं ॥

यस्माच्च सम आत्मनि परे च मातरि सर्वमहिलासु ।
अप्रियप्रियमानादिषु तस्मात् श्रमणस्ततश्च सामयिकं

यस्माच्च समो रागद्वेषरहित आत्मनि परे च, यस्माच्च मातरि सर्वमहिलासु च शुद्धभावेन समानः, सर्वा योषितो मातृसदृशः पश्यति, यस्माच्च प्रियाप्रियेषु समानः, यस्माच्च मानापमानादिषु समानस्तस्मात् स श्रमणस्तनश्च त सामायिकं जानीहीति ॥ २० ॥

जो जाणइ समवायं दव्वाण गुणाण पज्जयाणं च ।
सब्भावं तं सिद्धं सामाइयमुत्तमं जाणे ॥ २१ ॥

य: जानाति समवायं द्रव्याणां गुणानां पर्यायाणां च।
सद्भावं तं सिद्धं सामायिकमुत्तमं जानीहि ॥ २१॥

पूर्वगाथाभ्यां सम्यक्त्वसंयमयोः समागमनं व्याख्यातं अनया पुनर्गाथया ज्ञानसमागमनमाचष्टे। यो जनाति समवायं सादृश्यं स्वरूपं वा द्रव्याणां, द्रव्यसमवायं क्षेत्रसमवायं कालसमवायं भावसमवायं च जानाति। तत्र द्रव्यसमवायो नाम धर्माधर्मलोकाकाशैकजीवप्रदेशाः समाः। क्षेत्रसमवायो नाम सीमन्तनरकमनुष्यक्षेत्रर्जुविमानसिद्धालयाः समाः। कालसमवायो नाम समयः समयेन समः, अवसर्पिण्युत्सर्पिण्या समेत्यादि। भावसमवायो नाम केवलज्ञानं केवलदर्शनेन समानिति। गुणा रूपरसगन्धस्पर्शज्ञातृत्वद्रष्टृत्वादयस्तेषां समानतां जानाति। अथवौदयिकौपशमिकक्षायोपशमिकपारिणामिकगुणास्तेषां समानतां जानाति। पर्याया नारकत्वमनुष्यत्वतिर्यक्त्वदेवत्वादयस्तेषां समानतां जानाति। द्रव्याधारत्वेनापृथग्वर्तित्वेन च गुणानां समवायः। पर्यायाणां उत्पादविनाशध्रौव्यत्वेन समवायो भावसमवायो गुणेष्वन्तर्भवति। क्षेत्रसमवायः पर्यायेष्वन्तर्भवति। कालसमवायो द्रव्यसमवायेऽन्तर्भवतीति। द्रव्यसमवायं गुणसमवायं पर्यायसमवायं च यो जानाति तेषां सिद्धिं सद्भावं निष्पन्नं परमार्थरूपं च यो जानाति तं संयतं सामायिकमुत्तमं जानीहि। अथवा द्रव्याणां समवायं सिद्धिं, गुणपर्यायाणां च सद्भावं यो जा-

नाति तां सामायिकं जानीहि । अथवा समवृत्ति समवायं, द्रव्यगुणपर्यायाणां समवृत्ति, द्रव्यं गुणविरहितं नास्ति गुणाश्च द्रव्यविरहिता न सन्ति पर्यायाश्च द्रव्यगुणरहिता न सन्ति। एवंभूतं समवृत्ति समवायं सद्भावरूपं न संवृत्तिरूपं, न कल्पनारूपं, नाऽविद्यारूपं, स्वतः सिद्धं न समवायद्रव्यबलेन यो जानाति तं सामायिकं जानीहीति सम्बन्धः ॥

सम्यक्त्वचारित्रपूर्वकं सामायिकमाह—

रागदोसो णिरोहित्ता समदा सव्वकम्मसु ।
सुत्तेसु अ परिणामो सामाइयमुत्तमं जाणे ॥ २२ ॥
रागद्वेषौ निरुद्ध्य समता सर्वकर्मसु ।
सूत्रेषु च परिणामः सामायिकमुत्तमं जानीहि ॥ २२॥

रागद्वेषौ निरुध्य सर्वकर्मसु सर्वकर्तव्येषु या समता, सूत्रेषु च द्वादशांगचतुर्दशपूर्वेषु च यः परिणामः श्रद्धानं सामायिकमुत्तमं प्रकृष्टं जानीहि ॥ २२ ॥

तपःपूर्वकं सामायिकमाह—

विरदो सव्वसावज्जं तिगुत्तो पिहिदिंदिओ ।
जीवो सामाइयं णाम संजमट्ठाणमुत्तमं ॥ २३ ॥
विरतः सर्वसावद्यं त्रिगुप्तः पिहितेंद्रियः ।
जीवः सामायिकं नाम संयमस्थानमुत्तमं ॥ २३ ॥

सर्वसावद्याद्यो विरतस्त्रिगुप्तः, पिहितेन्द्रियो निरुद्धरूपादिविषयः, एवभूतो जीवः सामायिकं संयमस्थानमुत्तमं जानीहि जीवसामायिकसंयमयोरभेदादिति ॥ २३ ॥

भेदं च प्राह—

जस्स सण्णिहिदो अप्पा संजमे णियमे तवे ।
तस्स सामायियं ठादि इदि केवलिमासणे ॥ २४॥
यस्य संनिहितः आत्मा संयमे नियमे तपसि ।
तस्य सामायिकं तिष्ठति इति केवलिशासने[1] ॥ २४ ॥

यस्य संनिहितः स्थितः आत्मा । क्व, संयमे नियमे तपसि च तस्य सामायिकं तिष्ठति । इत्येवं केवलिनां शासनं एव केवलिनामाज्ञा शिक्षा वा । अथवास्मिन् केवलिशासने जिनागमे तस्य सामायिकं तिष्ठतीति ॥ २४ ॥

समत्वभावपूर्वकं भेदेन सामायिकमाह—

जो समो सव्वभूदेसु तसेसु थावरेसु य ।
तस्स सामायियं ठादि इदि केवलिसासणे ॥ २५॥
यः समः सर्वभूतेषु त्रसेषु स्थावरेषु च ।

---

१ अस्या गाथाया उत्तरार्धं द्वात्रिंशत्तमगाथापर्यन्तं सयोज्य सयोज्य पठनीयं ।

तस्य सामायिकं नाम इति केवलिशासने॥

यः समः सर्वभूतेषु-त्रसेषु स्थावरेषु च समस्तेषामपीडाकरस्तस्य सामायिकमिति ॥ २५ ॥

रागद्वेषविकाराभावभेदेन सामायिकमाह—

जस्स रागो य दोसो य वियडिं ण जणंति दु ।

यस्य रागश्च दोषश्च विकृतिं न जनयतस्तु ॥ २६॥

यस्य रागद्वेषौ विकृतिं विकारं न जनयतस्तस्य सामायिकमिति ॥ २६ ॥

कषायजयेन सामायिकमाह—

जेण कोधो य माणो य माया लोभो य णिज्जिदो ।

येन क्रोधश्च मानश्च माया लोभश्च निर्जिताः ।

येन क्रोधमानमायालोभाः सभेदाः सनोकषाया निर्जिता दलितास्तस्य सामायिकमिति ॥ २७ ॥

संज्ञालेश्याविकाराभावभेदेन सामायिकमाह—

जस्स सण्णा य लेस्सा य वियडिं ण जणंति दु ॥

यस्य संज्ञाश्च लेश्याश्च विकृतिं न जनयंति तु ॥

यस्य संज्ञा आहारभयमैथुनपरिग्रहाभिलाषा विकृतिं वि-

कारं न जनयन्ति । तथा यस्य लेश्याः कृष्णनीलकापोतपीतपद्मलेश्याः कषायानुरञ्जितयोगवृत्तयो विकृतिं विकारं न जनयन्ति तस्य सामायिकमिति ॥ २८ ॥

कामेन्द्रियविषयवर्जनद्वारेण सामायिकमाह—

जो दु रसे य फासे य कामे वज्जदि णिच्चसा ॥२९॥
यस्तु रसं च स्पर्शं च कामे वर्जयति नित्यशः ।

रसः कटुकषायादिभेदभिन्नः, स्पर्शो मृद्वादिभेदभिन्नः रसस्पर्शौ काम इत्युच्यते । रसनेन्द्रियं स्पर्शनेन्द्रियं च कामेन्द्रिये । यो रसस्पर्शौ कामौ वर्जयति नित्यं । कामेन्द्रियं च निरुणद्धि तस्य सामायिकमिति ॥ २९ ॥

भोगेन्द्रियविषयवर्जनद्वारेण सामायिकमाह—

जो रूवगंधसद्दे य भोगे वज्जदि णिच्चसा ॥ ३०
यः रूपगंधशब्दांश्च भोगं वर्जयति नित्यशः ॥ ३०

यः रूपं कृष्णनीलादिभेदभिन्नं, गन्धो द्विविधः सुरभ्यसुरभिभेदेन च, शब्दो वीणावंशादिसमुद्भवः. रूपगन्धशब्दा भोगा इत्युच्यन्ते, चक्षुर्घ्राणश्रोत्राणि भोगेन्द्रियाणि, यो रूपगन्धशब्दान् वर्जयति, भोगेन्द्रियाणि च नित्यं सर्वकालं निवारयति तस्य सामायिकमिति ॥ ३० ॥

दुष्टध्यानपरिहारेण सामायिकमाह—

जो दु अट्टं रुद्दं च झाणं वज्जदि णिच्चसा ॥ ३१ ॥
यस्तु आर्तं च रौद्रं च ध्यानं वर्जयति नित्यशः ।

चकारावनयोः स्वभेदग्राहकावति कृत्वैवमुच्यते यस्त्वार्तं चतुष्प्रकार रौद्रं च चतुष्प्रकार ध्यानं वर्जयति सर्वकाल तस्य सामायिकमिति ॥ ३१ ॥

शुभध्यानद्वारेण सामायिकस्थानमाह—

जो दु धम्मं च सुक्कं च झाणे झायदि णिच्चसा ॥
यस्तु धर्मं च शुक्लं च ध्यानं ध्यायति नित्यशः ॥ ३१

अत्रापि चकारावनयोः स्वभेदप्रतिपादकादिति कृत्वैवमाह—यस्तु धर्मं चतुष्प्रकार शुक्लं च चतुष्प्रकार ध्यानं ध्यायति युनक्ति तस्य सर्वकाल सामायिकं तिष्ठतीति । केवलिशासनमिति सर्वत्र सम्बन्धो द्रष्टव्य इति ॥ ३२ ॥

किमर्थं सामायिक प्रज्ञप्तमित्याशंकायामाह—

सावज्जजोगपरिवज्जणट्ठं
सामाइयं केवलिहिं पसत्थं ।
गिहत्थधम्मोऽपरमत्ति णिच्चा
कुज्जा बुधो अप्पहियं पसत्थं

सावद्ययोगपरिवर्जनार्थं

सामायिकं केवलिभिः प्रशस्तं ।
गृहस्थधर्मोऽपरम इति ज्ञात्वा
कुर्यात् बुधः आत्महितं प्रशस्तं ॥ ३३

वृत्तमेतत् । सावद्ययोगपरिवर्जनार्थं पापास्रववर्जनाय सामायिकं केवलिभिः प्रशस्तं प्रतिपादितं स्तुतमिति । यस्मात्तस्माद् गृहस्थधर्मः सारम्भारम्भादिप्रवृत्तिविशेषोऽपरमो जघन्यः संसारहेतुरिति ज्ञात्वा बुधः संयतः प्रशस्तं शोभनमात्महितं सामायिकं कुर्यादिति ॥ ३३ ॥

पुनरपि सामायिकमाहात्म्यमाह——

सामाइयह्मि दु कदे
समणो इर सावओ हवदि जह्मा ।
एदेण कारणेण दु
बहुसो सामाइयं कुज्जा ॥ ३४ ॥

सामायिके तु कृते
श्रमणः किल श्रावको भवति यस्मात् ।
एतेन कारणेन तु बहुशः
सामायिकं कुर्यात् ॥ ३४ ॥

सामायिके तु कृते सति श्रावकोऽपि किल श्रमणः सं-

यतो भवति। यस्मात्कस्मिंश्चित् पर्वणि कश्चित् श्रावकः सा-
मायिकसंयमं समन्वं गृहीत्वा श्मशाने स्थि(तः) तस्य पु-
त्रनप्तृबन्ध्वादिमरणपीडादिमहोपसर्गः संजातास्तथाप्यसौ
न सामायिकव्रतान्निर्गतः। भावश्रमणः संवृत्तस्तर्हि श्रा-
वकत्वं कथं? प्रत्याख्यानमन्दतरत्वात्। अत्र कथा वाच्या।
तस्मादनेन कारणेन बहुशो बाहुल्येन सामायिकं कुर्यादिति।

पुनरपि सामायिकमाहात्म्यमाह—

**सामाइए कदे सावएण विद्धो मओ अरणम्हि।**
**सो य मओ उद्धादो ण य सो सामाइयं फिडिओ**

**सामायिके कृते श्रावकेण विद्धो मृगः अरण्ये।**
**स च मृगः उद्धतः न च स सामायिकं स्फोटितवान्॥**

सामाइए—सामायिके। कदे—कृते। सावएण—श्रावके-
न। विद्धो—व्यथितः केनापि। मओ—मृगो हरिणपोतः।
अरणम्हि—अरण्येऽटव्यां। सो य मओ—सोऽपि मृगः। उ-
द्धादो मृतः प्राणैर्विपन्नः। ण य सो—न चासौ। सामाइयं सामा-
यिकात्। फिडिओ—निर्गतः परिभ्रष्टः। केनचिच्छ्रावके-
णाटव्यां सामायिके कृते लुब्धकेन विद्धो मृगः पादान्तरे श्राग-
स्य रुधिरव्यथितो वेदनार्तः सन् स्फोटकार छित्वा मृतो मृगो
नासौ श्रावकः सामायिकात् संयमान्निर्गतः संसारदोषदर्श-
नादिति, तेन कारणेन सामायिकं क्रियत इति सम्बन्धः॥

केन सामायिकमुद्दिष्टमित्याशंकायामाह—

बावीसं तित्थयरा सामायियसंजमं उवदिसंति।
छेदुवठावणियं पुण भयवं उसहो य वीरो य ॥३६

द्वाविंशतितीर्थकराः सामायिकसंयमं उपदिशंति।
छेदोपस्थापनं पुनः भगवान् ऋषभश्च वीरश्च ॥

द्वाविंशतितीर्थंकरा अजितादिपार्श्वनाथपर्यन्ताः सामायिकसंयममुपदिशन्ति प्रतिपादयन्ति। छेदोपस्थापनं पुनः संयमं वृषभो वीरश्च प्रतिपादयति ॥ ३६ ॥ किमर्थं वृषभमहावीरौ छेदोपस्थापनं प्रतिपादयतो यस्मात्—

आचक्खिदुं विभाजिदुं
विण्णादुं चावि सुहदरं होदि।
एदेण कारणेण दु
महव्वदा पंच पण्णत्ता ॥ ३७ ॥

आख्यातुं विभक्तुं विज्ञातुं चापि सुखतरं भवति।
एतेन कारणेन तु महाव्रतानि पंच प्रज्ञप्तानि ३७

आचक्खिदुं-आख्यातुं कथयितुं आस्वादयितुं वा। विभयिदुं-विभक्तुं पृथक्पृथक्भावयितुं। विण्णादुं-विज्ञातुमवबोद्धुं चापि। सुहदरं सुखतरं सुखग्रहणं। होदि-भ-

चति एदेण-एतेन । कारणेन । महव्वदा-महाव्रतानि । पंच पण्णत्ता-पंच प्रज्ञप्तानि। यस्मादन्यस्मै प्रतिपादयितुं स्वेच्छानुष्ठातुं विभक्तुं, विज्ञातुं चापि भवति सुगमतरं सामायिकं, तेन कारणेन महाव्रतानि पंच प्रज्ञप्तानीति ॥ २७ ॥

किमर्थमादितीर्थेऽन्ततीर्थे च छेदोपस्थापनसंयममित्याशंकायामाह—

आदीए दुव्विसोधण
णिहणे तह सुट्ठु दुरणुपाले य ।
पुरिमा य पच्छिमा वि हु
कप्पाकप्पं ण जाणंति ॥

आदौ दुर्विशोधने निधने तथा सुष्ठु दुरनुपाले च ।
पूर्वाश्च पश्चिमा अपि हि कल्प्याकल्प्यं न जानंति ॥

आदितीर्थे शिष्याः दुःखेन शोध्यन्ते सुष्ठु ऋजुस्वभावा यतः । तथा पश्चिमतीर्थे शिष्याः दुःखेन प्रतिपाल्यन्ते सुष्ठु वक्रस्वभावा यतः । पूर्वकालशिष्याः पश्चिमकालशिष्याश्च अपि स्फुटं कल्प्यं-योग्यं, अकल्प्यं-अयोग्यं च न जानन्ति यतस्ततः आदौ निधने च छेदोपस्थापनमुपदिशत इति ॥

सामायिकस्वरूपमाह—

पडिलिहियअंजलिकरो

उवछुत्तो उट्ठिऊण एयमणो ।
अव्वाखित्तो वुत्तो
करेदि सामाइयं भिक्खू ॥ ३९ ॥

प्रतिलेखितांजलिकरः उपयुक्तः उत्थाय एकमनाः ।
अव्याक्षिप्तः उक्तः करोति सामायिकं भिक्षुः ३९

प्रतिलेखितावञ्जलिकरौ येनासौ प्रतिलेखिताञ्जलिकरः उपयुक्तः समाहितमतिः, उत्थाय-स्थित्वा, एकाग्रमना अव्याक्षिप्तः, आगमोक्तक्रमेण करोति सामायिकं भिक्षुः । अथवा प्रतिलेख्य शुद्धो भूत्वा द्रव्यक्षेत्रकालभावशुद्धिं कृत्वा, प्रकृष्टाञ्जलिकरमुकुलितकरः प्रतिलेखनेन सहिताञ्जलिकरो वा सामायिकं करोतीति ॥ ३९ ॥

सामायिकनिर्युक्तिमुपसंहर्तुं चतुर्विंशतिस्तवं सूचयितुं प्राह—

सामाइयणिज्जुत्ती एसा कहिया मए समासेण ।
चउवीसयणिज्जुत्ती एत्तो उड्ढं पवक्खामि ॥४०॥

सामायिकनिर्युक्तिः एषा कथिता मया समासेन ।
चतुर्विंशतिनिर्युक्तिं इत ऊर्ध्वं प्रवक्ष्यामि ॥ ४० ॥

सामायिकनिर्युक्तिरेषा कथिता समासेन । इत ऊर्ध्वं चतुर्विंशतिस्तवनिर्युक्तिं, प्रवक्ष्यामीति ॥ ४० ॥

तदवबोधनार्थं निक्षेपमाह—

**णामट्ठवणा दव्वे खेत्ते काले य होदि भावे य।**
**एसो थवह्मि णेओ णिक्खेवो छव्विहो होइ ४१**

**नाम स्थापना द्रव्यं क्षेत्रं कालश्च भवति भावश्च ।**
**एष स्तवे ज्ञेयो निक्षेपः षड्विधो भवति ॥ ४१ ॥**

नामस्तवः स्थापनास्तवो द्रव्यस्तवः क्षेत्रस्तवः कालस्तवो भावस्तव एष स्तवे निक्षेपः षड्विधो भवति ज्ञातव्यः । चतुर्विंशतितीर्थकराणां यथार्थानुगतैरष्टोत्तरसहस्रसंख्यैर्नामभिः स्तवनं चतुर्विंशतिनामस्तवः, चतुर्विंशतितीर्थकराणामपरिमितानां कृत्रिमाकृत्रिमस्थापनानां स्तवनं चतुर्विंशतिस्थापनास्तवः । तीर्थकरशरीराणां परमौदारिकस्वरूपाणां वर्णभेदेन स्तवनं द्रव्यस्तवः । कैलाससम्मेदोर्जयन्तपावाचम्पानगरादिनिर्वाणक्षेत्राणां समवसृतिक्षेत्राणां च स्तवनं क्षेत्रस्तवः । स्वर्गावतरणजन्मनिष्क्रमणकेवलोत्पत्तिनिर्वाणकालानां स्तवनं कालस्तवः । केवलज्ञानकेवलदर्शनादिगुणानां स्तवनं भावस्तवः । अथवा जातिद्रव्यगुणक्रियानिरपेक्षं संज्ञाकर्म चतुर्विंशतिमात्रं नामस्तवः । चतुर्विंशतितीर्थकराणां साकृत्यनाकृतिवस्तुनि गुणानारोप्य स्तवनं स्थापनास्तवः । द्रव्यस्तवो द्विविधः आगमनोआगमभेदेन । चतुर्विंशतिस्तवव्यावर्णनप्राभृतज्ञाय्यनुपयुक्त आगमद्रव्यस्तवः ।

चतुर्विंशतिस्तवव्यावर्णनप्राभृतज्ञायक ( ज्ञानम् ) शरीरमाविर्भावनद्व्यतिरिक्तभेदेन नोआगमद्रव्यस्तवस्त्रिविधः, पूर्वबन्सर्वमन्यत् । चतुर्विंशतिस्तवसहितं क्षेत्रं कालश्च क्षेत्रस्तवः कालस्तवश्च । भावस्तव आगमनोआगमभेदेन द्विविधः । चतुर्विंशतिस्तवव्यावर्णनप्राभृतज्ञायी उपयुक्त आगमभावचतुर्विंशतिस्तवः । चतुर्विंशतिस्तवपरिणतपरिणामो नोआगमभावस्तव इति । भरतैरावतापेक्षश्चतुर्विंशतिस्तव उक्तः । पूर्वविदेहापरविदेहापेक्षस्तु सामान्यतीर्थंकरस्तव इति कृत्वा न दोष इति ॥ ४१ ॥

अथ नामस्तवेन भावस्तवेन प्रयोजनं सर्वेषां प्रयोजनं। तदर्थमाह-

लोगुज्जोए धम्मतित्थयरे जिणवरे य अरहंते।
कित्तण केवलिमेव य उत्तमबोहिं मम दिसंतु ४२

लोकोद्योतकरा धर्मतीर्थकरा जिनवराश्च अर्हंतः।
कीर्तनीयाः केवलिन एव च उत्तमबोधिं मम दिशंतु

लोको जगत् । उद्योतः प्रकाशः । धर्म उत्तमक्षमादिः । तीर्थं संसारतारणोपायं । धर्ममेव तीर्थं कुर्वन्तीति धर्मतीर्थकराः । कर्मारातीन जयन्तीति जिनाः तेषां वरा श्रेष्ठा जिनवराः । अर्हन्तः सर्वज्ञाः । कीर्तनं प्रशंसनं कीर्तनीयाः । केवलिनः सर्वप्रत्यक्षावबोधाः । एवं च । उत्तमाः प्रकृष्टा बोधयः । मे बोधिं संसारनिस्तरणोपायं । दिशन्तु ददतु ।

एवं स्तवः क्रियते। अर्हन्तो लोकोद्योतकरा धर्मतीर्थकरा जिनवराः केवलिन उत्तमाश्च ये तेषां कीर्तनं प्रशंसनं बोधि मह्यं दिशतु प्रयच्छतु। अथवा एते अर्हंतो धर्मतीर्थकरा लोकोद्योतकराः जिनवराः कीर्तनीया उत्तमाः केवलिनो मम बोधि दिशन्तु। अथवा अर्हन्तः सर्वविशेषेण (षणेन) विशिष्टाः केवलिनां च कीर्तनं मह्यं बोधि प्रयच्छन्त्विति सम्बन्धः ॥ ४२ ॥

एतैर्दशभिरधिकारैश्चतुर्विंशतिस्तवो व्याख्यायत इति कृत्वादौ तावल्लोकनिरुक्तिमाह—

लोयदि आलोयदि प-
  ल्लोयदि सल्लोयदित्ति एगत्थो।
जह्मा जिणेहिं कसिणं
  तेणेसो वुच्चदे लोओ॥ ४३॥

लोक्यते आलोक्यते प्रलोक्यते संलोक्यते इति एकार्थः
यस्माज्जिनैः कृत्स्नं तेन एष उच्यते लोकः॥ ४३॥

लोक्यते आलोक्यते प्रलोक्यते संलोक्यते दृश्यते इत्येकार्थः। यं जिनैरिति तस्माल्लोक इत्युच्यते? यं छद्मस्थावस्थायां-मतिज्ञानश्रुतज्ञानाभ्यां लोक्यते दृश्यते यस्मात्स लोकः। अवधाविधिज्ञानेनालोक्यते पुद्गलमर्यादारूपेण

दृश्यते यस्मात्तस्माल्लोकः । अथवा मनःपर्ययज्ञानेन मलोक्यते विशेषेण रूपेण दृश्यते यस्मात्तस्माल्लोकः । अथवा केवलज्ञानेन जिनैः कृत्स्नं यथा भवतीति तथा संलोक्यते सर्वद्रव्यपर्यायैः सम्यगुपलभ्यते यस्मात्तस्माल्लोकः । तेन कारणेन लोकः स इत्युच्यत इति ॥ ४३ ॥

नवपदारैर्निक्षेपैर्लोकस्वरूपमाह—

**णाम ट्ठवणं दव्वं खेत्तं चिण्हं कसायलोओ य ।**
**भवलोगो भावलोगो पज्जयलोगो य णादव्वो ॥**

नाम स्थापना द्रव्यं क्षेत्रं चिन्हं कषायलोकश्च ।
भवलोको भावलोकः पर्यायलोकश्च ज्ञातव्यः ॥ ४४ ॥

नात्र विभक्तिर्निर्देशस्य प्राधान्यं प्राकृतेऽन्यथापि वृत्तेः । लोकशब्दः प्रत्येकमभिसम्बध्यते । नामलोकः स्थापनालोको द्रव्यलोकः क्षेत्रलोकश्चिन्हलोकः कषायलोको भवलोको भावलोकः पर्यायलोकश्च ज्ञातव्य इति ॥ ४४ ॥

तत्र नामलोकं विवृण्वन्नाह—

**णामाणि जाणि काणिचि सुहासुहाणि लोगम्हि ।**
**णामलोगं वियाणाहि अणंतजिणदेसिदं ॥ ४५**

नामानि यानि कानिचित् शुभाशुभानि लोके ।
नामलोकं विजानीहि अनंतजिनदर्शितं ॥

नामानि संज्ञारूपाणि, यानि कानिचिच्छुभान्यशुभानि च शोभनान्यशोभनानि च सन्ति विद्यंते जीवलोकेऽस्मिन् तन्नामलोकमनन्तजिनदर्शितं विजानीहि । न विद्यतेऽन्तो विनाशोऽवसानं वा येषां तेऽनन्तास्ते च ते जिनाश्चानन्तजिनास्तैर्दृष्टो यतः इति ॥ ४५ ॥

स्थापनालोकमाह—

ठविदं ठाविदं चावि जं किंचि अत्थि लोगम्हि।
ठवणालोगं वियाणाहि अणंतजिणदेसिदं ॥ ४६॥

स्थितं स्थापितं चापि यत् किंचिदस्ति लोके।
स्थापनालोकं विजानीहि अनंताजिनदर्शितं ॥

ठविदं स्वतःस्थितमकृत्रिमं स्थापितं कृत्रिमं चापि यत्किंचिदस्ति विद्यतेऽस्मिन्न लोके तत्सर्वं स्थापनालोकमिति जानीहि, अनन्तजिनदर्शितत्वादिति ॥ ४६ ॥

द्रव्यलोकस्वरूपमाह—

जीवाजीवं रूवारूवं सपदेसमपदेसं च।
दव्वलोगं वियाणाहि अणंतजिणदेसिदं ॥४७

जीवाजीवं रूप्यरूपि सप्रदेशमप्रदेशं च।
द्रव्यलोकं विजानीहि अनंतजिनदर्शितं ॥ ४७ ॥

दृश्यते यस्मात्तस्माल्लोकः । अथवा मनःपर्ययज्ञानेन प्रलोक्यते विशेषेण रूपेण दृश्यते यस्मात्तस्माल्लोकः । अथवा केवलज्ञानेन जिनैः कृत्स्नं यथा भवतीति तथा संलोक्यते सर्वैद्रव्यपर्यायैः सम्यगुपलभ्यते यस्मात्तस्माल्लोकः । तेन कारणेन लोकः स इत्युच्यत इति ॥ ४३ ॥

नवप्रकारैर्निक्षेपैर्लोकस्वरूपमाह—

णाम ट्ठवणं दव्वं खेत्तं चिण्हं कसायलोओ य ।
भवलोगो भावलोगो पज्जयलोगो य णादव्वो ॥
नाम स्थापना द्रव्यं क्षेत्रं चिन्हं कषायलोकश्च ।
भवलोको भावलोकः पर्यायलोकश्च ज्ञातव्यः ॥ ४४ ॥

नात्र विभक्तिनिर्देशस्य प्राधान्यं प्राकृतेऽन्यथापि वृत्तेः । लोकशब्दः प्रत्येकमभिसम्बध्यते । नामलोकः स्थापनालोको द्रव्यलोकः क्षेत्रलोकश्चिन्हलोकः कषायलोको भवलोको भावलोकः पर्यायलोकश्च ज्ञातव्य इति ॥ ४४ ॥

तत्र नामलोकं विवृण्वन्नाह—

णामाणि जाणि काणिचि सुहासुहाणि लोगम्हि ।
णामलोगं वियाणाहि अणंतजिणदेसिदं ॥ ४५
नामानि यानि कानिचित् शुभाशुभानि लोके ।
नामलोकं विजानीहि अनंतजिनदर्शितं ॥

नामानि संज्ञारूपाणि, यानि कानिचिच्छुभान्यशुभानि च शोभनान्यशोभनानि च सन्ति विद्यंते जीवलोकेऽस्मिन् तन्नामलोकमनन्तजिनदर्शितं विजानीहि । न विद्यतेऽन्तो विनाशोऽवसानं वा येषां तेऽनन्तास्ते च ते जिनाश्चानन्तजिनास्तैर्दृष्टो यतः इति ॥ ४५ ॥

स्थापनालोकमाह—

**ठविदं ठाविदं चावि जं किंचि अत्थि लोगम्हि ।**
**ठवणालोगं वियाणाहि अणंतजिणदेसिदं ॥ ४६॥**

स्थितं स्थापितं चापि यत् किंचिदस्ति लोके ।
स्थापनालोकं विजानीहि अनंतजिनदर्शितं ॥

ठविदं-स्वतःस्थितमकृत्रिमं स्थापितं कृत्रिमं चापि यत्किंचिदस्ति विद्यतेऽस्मिन लोके तत्सर्वं स्थापनालोकमिति जानीहि, अनन्तजिनदर्शितत्वादिति ॥ ४६ ॥

द्रव्यलोकस्वरूपमाह—

**जीवाजीवं रूवारूवं सपदेसमपदेसं च ।**
**दव्वलोगं वियाणाहि अणंतजिणदेसिदं ॥४७**

जीवाजीवं रूप्यरूपि सप्रदेशमप्रदेशं च ।
द्रव्यलोकं विजानीहि अनंतजिनदर्शितं ॥ ४६ ॥

जीवाश्चेतनावन्तः । अजीवाः कालाकाशधर्माधर्माः पुद्गलाः । रूपिणो रूपरसगन्धस्पर्शशब्दवन्तः पुद्गलाः । अरूपिणः कालाकाशधर्माधर्मा जीवाश्च । सप्रदेशाः सर्वे जीवादयः । अप्रदेशौ कालाणुपरमाणू च । एवं सर्वलोकं द्रव्यलोकं विजानीहि, अक्षयसर्वज्ञदृष्टो यत इति ॥ ४७ ॥

तथेममपि द्रव्यलोकं विजानीहीत्याह--

**परिणाम जीव मुत्तं सपदेसं एकखेत्त किरिओ य।**
**णिच्चं कारण कत्ता सव्वगदिदरह्मि अपवेसो॥४८**

**परिणामि जीवो मूर्तं सप्रदेशं एकक्षेत्रं क्रियावत् च।**
**नित्यः कारणं कर्ता सर्वगत इतरस्मिन् अप्रवेशः ४८**

परिणामोऽन्यथाभावो विद्यते येषां ते परिणामिनः । के ते जीवपुद्गलाः । शेषाणि धर्माधर्मकालाकाशान्यपरिणामीनि कुतो द्रव्यार्थिकनयापेक्षया व्यञ्जनपर्यायं चाश्रित्यैतदुक्तं । पर्यायार्थिकनयापेक्षयान्वर्थपर्यायमाश्रित्य सर्वेऽपि परिणामापरिणामात्मका यत इति । जीवो जीवद्रव्यं चेतनालक्षणो यतः । अजीवाः पुनः सर्वे पुद्गलादयो ज्ञातृत्वदृष्टृत्वाद्यभावादिति । मूर्तं पुद्गलद्रव्यं रूपादिमत्त्वात् । शेषाणि जीवधर्माधर्मकालाकाशान्यमूर्तानि रूपादिविरहितत्वात् । सप्रदेशानि सांशानि जीवधर्माधर्मपुद्गलाकाशानि प्रदेशबन्धदर्शनात् । अप्रदेशाः कालाणवः परमाणुश्च प्रचयाभावाद् धं-

न्याभावाच । धर्माधर्माकाशान्येकरूपाणि सर्वदा प्रदेशविघा-तामावात् । शेषाः ससारिजीवपुद्गलकाला अनेकरूपाः प्रदेशानां भेददर्शनात् । आकाशं क्षेत्र सर्वपदार्थानामाधारत्वात् । शेषा जीवपुद्गलधर्माधर्मकाला अक्षेत्राणि अवगाहनलक्षणाभावात् । जीवपुद्गलाः क्रियावन्तो गतेर्दर्शनात् शेषा धर्माधर्माकाशकाला अक्रियावन्तो गतिक्रियाया अभावदर्शनात् । नित्या धर्माधर्माकाशपरमार्थकालाः व्यवहारनयापेक्षया व्यञ्जनपर्यायाभावमपेक्ष्य विनाशाभावात् । जीवपुद्गला अनित्या व्यञ्जनपर्यायदर्शनात् । कारणानि पुद्गलधर्माधर्मकालाकाशानि जीवोपकारकत्वेन वृत्तत्वात् । जीवोऽकारणं स्वतंत्रत्वात् । जीवः कर्ता शुभाशुभभोक्तृत्वात् । शेषा धर्माधर्मपुद्गलाकाशकाला अकर्तारः शुभाशुभभोक्तृत्वाभावात् आकाशं सर्वगतं सर्वत्रोपलभ्यमानत्वात् । शेषाण्यसर्वगतानि जीवपुद्गलधर्माधर्मकालद्रव्याणि सर्वत्रोपलंभाभावात् । तस्मात्परिणामजीवमूर्तसप्रदेशैकक्षेत्रक्रियावन्नित्यकारणकर्तृसर्वगतिस्वरूपेण द्रव्यलोकं जानीहि, इतरैश्चापरिणामादिभिः प्रदेशैः द्रव्यलोकं जानीहीति सम्बन्धः ॥ ४८ ॥

क्षेत्रलोकस्वरूपं विवृण्वन्नाह—

**आयासं सपदेसं उड्ढमहो तिरियलोगं च ।**
**खेत्तलोगं वियाणाहि अणंतजिणदेसिदं ॥ ४९ ॥**

आकाशं सप्रदेशं ऊर्ध्वमधः तिर्यग्लोकं च ।

क्षेत्रलोकं विजानीहि अनंतजिनदर्शितं ॥ ४९ ॥

आकाशं समदेशं प्रदेशैः सह । ऊर्ध्वलोकं मध्यलोकमधोलोकं च । एतत्सर्वं क्षेत्रलोकमनन्तजिनदृष्टं विजानीहीति ॥ ४९ ॥

चिन्हलोकमाह—

जं दिट्ठं संठाणं दव्वाण गुणाण पज्जयाणं च ।
चिण्हलोगं वियाणाहि अणंतजिणदेसिदं ॥५०॥

यत् दृष्टं संस्थानं द्रव्याणां गुणानां पर्यायाणां च ।
चिह्नलोकं विजानीहि अनंतजिनदर्शितं ॥ ५० ॥

द्रव्यसंस्थानं धर्माधर्मयोर्लोकाकारेण संस्थानं । कालद्रव्यस्याकाशप्रदेशस्वरूपेण संस्थानं । आकाशस्य केवलज्ञानस्वरूपेण संस्थानं । लोकाकाशस्य गृहगुहादिस्वरूपेण संस्थानं । पुद्गलद्रव्यस्य लोकस्वरूपेण संस्थानं द्वीपनदीसागरपर्वतपृथिव्यादिरूपेण संस्थानं । जीवद्रव्यस्य समचतुरस्रन्यग्रोधादिस्वरूपेण संस्थानं । गुणानां द्रव्याकारेण कृष्णनीलशुक्लादिस्वरूपेण वा संस्थानं । पर्यायाणां दीर्घह्रस्ववृत्तत्र्यस्रचतुरस्रादिनारकत्वतिर्यक्त्वमनुष्यत्वदेवत्वादिस्वरूपेण संस्थानं । यद्दृष्टं संस्थानं द्रव्याणां गुणानां पर्यायाणां च चिन्हलोकं विजानीहीति ॥ ५० ॥

कषायलोकमाह—

कोधो माणो माया लोभो उदिण्णा जस्स जंतुणो
कसायलोगं वियाणाहि अणंताजिणदेसिदं ५१॥

क्रोधो मानो माया लोभः उदीर्णाः यस्य जंतोः ।
कषायलोकं विजानीहि अनंतजिनदर्शितं ॥ ५१ ॥

यस्य जन्तोर्जीवस्य क्रोधमानमायालोभा उदीर्णा उदयमागताः । तं कषायलोकं विजानीहीति ॥ ५१ ॥

भवलोकमाह—

णेरइयदेवमाणुसतिरिक्खजोणिं गदा य जे सत्ता
णियय भवे वट्टंता भवलोगं तं विजाणाहि ॥५२॥

नारकदेवमनुष्यतिर्यग्योनिगताश्च ये सत्त्वाः ।
निजभवे वर्तमाना भवलोकं तं विजानीहि ॥ ५२ ॥

नारकदेवमनुष्यतिर्यग्योनिषु गताश्च ये जीवा निजभवे निजायुःप्रमाणे वर्तमानास्तं भवलोकं विजानीहीति ॥ ५२ ॥

भावलोकमाह—

तिव्वो रागो य दोसो य उदिण्णा जस्स जंतुणो
भावलोगं वियाणाहि अणंताजिणदेसिदं ॥५३॥

तीव्रो रागश्च द्वेषश्च उदीर्णा यस्य जंतोः ।
भावलोकं विजानीहि अनंतजिनदर्शितं ॥ ५३ ॥

यस्य जन्तोस्तीव्रौ रागद्वेषौ प्रीतिविप्रीती उदीर्णौ उदयमागतौ तं भावलोकं विजानीहीति ॥ ५३ ॥

पर्यायलोकमाह—

दव्वगुणखेत्तपज्जय
भावाणुभावो य भावपरिणामो ।
जाण चउव्विहमेयं
पज्जयलोगं समासेण ॥ ५४ ॥

द्रव्यगुणक्षेत्रपर्यायाः भावानुभावश्च भावपरिणामः ।
जानीहि चतुर्विधमेवं पर्यायलोकं समासेन ॥ ५४ ॥

द्रव्याणां गुणा ज्ञानदर्शनसुखवीर्यकर्तृत्वभोक्तृत्वकृष्णनीलशुक्लरक्तपीतगतिकारकत्वस्थितिकारकत्वावगाहनागुरुलघुवर्तमानादयः । क्षेत्रपर्यायाः सप्तनरकपृथ्वीप्रदेशपूर्वविदेहापरविदेहभरतैरावतद्वीपसमुद्रत्रिषष्टिस्वर्गभूमिभेदादयः । भावानामनुभवः । आयुषो जघन्यमध्यमोत्कृष्टविकल्पः । भावो नाम परिणामोऽसंख्यातलोकप्रदेशमात्रः शुभाशुभरूपः कर्मादाने परित्यागे वा समर्थः । द्रव्यस्य गुणाः पर्यायलोकः, क्षेत्रस्य पर्यायाः पर्यायलोकः भवस्यानुभवः पर्यायलोकः

भावो नाम परिणामः पर्यायलोकः एवं चतुर्विधं पर्यायलोकं समासेन जानीहीति ॥ ५४ ॥

उद्योतस्य स्वरूपमाह—

उज्जोवो खलु दुविहो णादव्वो दव्वभावसंजुत्तो।
दव्वुज्जोवो अग्गी चंदो सूरो मणी चेव ॥५५॥

उद्योतः खलु द्विविधः ज्ञातव्यः द्रव्यभावसंयुक्तः।
द्रव्योद्योतः अग्निः चंद्रः सूर्यो मणिश्चैव ॥ ५५ ॥

उद्योतः प्रकाशः खलु द्विविधः स्फुटं ज्ञातव्यो द्रव्यभाव-भेदेन। द्रव्यसयुक्तो भावसंयुक्तश्च। तत्र द्रव्योद्योतोऽग्निश्चन्द्रः सूर्यो मणिश्च। एवकारः प्रकारार्थः। एवंविधोऽन्योऽपि द्रव्योद्योतो ज्ञात्वा वक्तव्य इति ॥ ५५ ॥

भावोद्योतं निरूपयन्नाह—

भावुज्जोवो णाणं
जह भणियं सव्वभावदरिसीहिं।
तस्स दुपयोगकरणे
भावुज्जोवोत्ति णादव्वो ॥ ५६ ॥

भावोद्योतो ज्ञानं यथा भणितं सर्वभावदर्शिभिः।
तस्य तु उपयोगकरणे भावोद्योत इति ज्ञातव्यः ॥

भावोद्योतो नाम ज्ञानं यथा भणितं सर्वभावदर्शिभिः-येन प्रकारेण सर्वपदार्थदर्शिभिर्ज्ञानमुक्तं तज्ज्ञानोद्योत ( तः ) परमार्थद्योतस्तया ज्ञानस्योपयोगकरणात् स्वपरप्रकाशकत्वाज्ज्ञानोद्योत इति ज्ञातव्यः ॥ ५६ ॥

पुनरपि भावोद्योतस्य भेदमाह—

पंचविहो खलु भणिओ
भावुज्जोवो य जिणवरिंदेहिं ।
आभिणिओहियसुदओ-
हि णाणमणकेवलं णेयं ॥५७॥

पंचविधः खलु भाणितः भावोद्योतश्च जिनवरेंद्रैः।
आभिनिबोधिकश्रुतावधिज्ञानमनःकेवलं ज्ञेयं ॥५७॥

स भावोद्योतो जिनवरेन्द्रैः पंचविधः पंचप्रकारः खलुस्फुटं, भणितः प्रतिपादितः । आभिनिबोधिकश्रुतावधिज्ञानमनःपर्ययकेवलमयो मतिश्रुतावधिमनःपर्ययकेवलज्ञानभेदेन पंचप्रकार इति ॥ ५७ ॥

द्रव्यभावोद्योतयोः स्वरूपमाह—

दव्वुज्जोवोज्जोवो
पडिहण्णदि परिमिदह्मि खेत्तह्मि ।

भावुज्जोवोज्जोवो
लोगालोगं पयासेदि ॥ ५८ ॥

द्रव्योद्योतः उद्योतः प्रतिहन्यते परिमिते क्षेत्रे ।
भावोद्योत उद्योतः लोकालोकं प्रकाशयति ॥ ५८ ॥

द्रव्योद्योतो य उद्योतः स प्रतिहन्यतेऽन्येन द्रव्येण परिमिते च क्षेत्रे वर्तते । भावोद्योतः पुनरुद्योतो लोकमलोकं च प्रकाशयति न प्रतिहन्यते नापि परिमिते क्षेत्रे वर्ततेऽप्रतिघातिसर्वगतत्वादिति ॥ ५८ ॥ तस्मात्—

लोगस्सुज्जोवयरा
दव्वुज्जोएण ण हु जिणा होंति ।
भावुज्जोवयरा पुण
होंति जिणवरा चउव्वीसा ॥ ५९ ॥

लोकस्योद्योतकरा द्रव्योद्योतेन न खलु जिना भवंति
भावोद्योतकराः पुनः भवंति जिनवराः चतुर्विंशतिः ५९

लोकस्योद्योतकरा द्रव्योद्योतेन नैव भवन्ति जिनाः । भावोद्योतकरा पुनर्भवन्ति जिनवराश्चतुर्विंशतिः । अतो भावोद्योतेनैव लोकस्योद्योतकरा जिना इति स्थितमिति । लोकोद्योतकरा इति व्याख्यातं ॥ ५९ ॥

धर्मतीर्थकरा इति पदं व्याख्यातुकामः प्राह—

तिविहो य होदि धम्मो
सुदधम्मो अत्थिकायधम्मो य ।
तदिओ चरित्तधम्मो
सुदधम्मो एत्थ पुण तित्थं ॥ ६० ॥

त्रिविधश्च भवति धर्मः श्रुतधर्मः आस्तिकायधर्मश्च।
तृतीयः चारित्रधर्मः श्रुतधर्मः अत्र पुनः तीर्थं ६०

धर्मस्तावत्त्रिप्रकारो भवति । श्रुतधर्मोऽस्तिकायधर्मस्तृतीयश्चारित्रधर्मः । अत्र पुनः श्रुतधर्मस्तीर्थान्तरं संसारसागरं तरन्ति येन तत्तीर्थमिति ॥ ६० ॥

तीर्थस्य स्वरूपमाह—

दुविहं च होइ तित्थं णादव्वं दव्वभावसंजुत्तं ।
एदेसिं दोण्हंपि य पत्तेय परूवणा होदि ॥ ६१ ॥

द्विविधं च भवति तीर्थं ज्ञातव्यं द्रव्यभावसंयुक्तं ।
एतयोः द्वयोरपि प्रत्येकं प्ररूपणा भवति ॥ ६१ ॥

द्विविधं च भवति तीर्थं द्रव्यसंयुक्तं भावसंयुक्तं चेति । द्रव्यतीर्थमपरमार्थरूपं । भावतीर्थं पुनः परमार्थभूतमन्यापेक्षाभावात् । एतयोर्द्वयोरपि तीर्थयोः प्रत्येकं प्ररूपणा भवति ॥ ६१ ॥

द्रव्यतीर्थस्य स्वरूपमाह—

दाहोपसमण तण्हा छेदो मलपंकपवहणं चेव।
तिहिं कारणेहिं जुत्तो तह्मा तं दव्वदो तित्थं ६२

दाहोपशमनं तृष्णाछेदः मलपंकप्रवहणं चैव।
त्रिभिः कारणैःयुक्तं तस्मात् तद्द्रव्यतःतीर्थम्॥६२॥

द्रव्यतीर्थेन दाहस्य संतापस्योपशमनं भवति तृष्णाया-श्छेदो विनाशो भवति स्तोककालं पंकस्य च प्रवहणं शोधनमेव भवति न धर्मादिको गुणस्तस्मात्त्रिभिः कारणैर्युक्तं द्रव्यतस्तीर्थं भवतीति॥ ६२ ॥

भावतीर्थस्वरूपमाह—

दंसणणाणचरित्ते णिज्जुत्ता जिणवरा दु सव्वेपि।
तिहिं कारणेहिं जुत्ता तह्मा ते भावदो तित्थं ॥

दर्शनज्ञानचारित्रैः निर्युक्ता जिनवरास्तु सर्वेपि।
त्रिभिः कारणैः युक्ताः तस्मात् ते भावतस्तीर्थम् ॥

दर्शनज्ञानचारित्रैर्युक्ताः संयुक्ता जिनवराः सर्वेऽपि ते तीर्थं भवति तस्मात्त्रिभिः कारणैरपि भावतस्तीर्थमिति भावो-द्योतेन लोकोद्योतकरा भावतीर्थकर्तृत्वेन धर्मतीर्थकरा इति। अथवा दर्शनज्ञानचारित्राणि जिनवरैः सर्वैरपि निर्युक्तानि सेवितानि तस्मात्तानि भावतस्तीर्थमिति ॥ ६३ ॥

जिनवरा अर्हन्नति पदं व्याख्यातुकामः प्राह—

जिदकोहमाणमाया
जिदलोहा तेण ते जिणा होंति।
हंता अरिं च जम्मं
अरहंता तेण वुच्चंति ॥ ६४ ॥

जितक्रोधमानमाया जितलोभाः तेन ते जिना भवंति
हंतारः अरीणां च जन्मनः अर्हंतस्तेन उच्यंते ॥६४॥

यस्माज्जितक्रोधमानमायालोभास्तस्माच्चेन कारणेन ते जिना इति भवंति येनारीणां हन्तारो जन्मनः संसारस्य च हन्तारस्तेनार्हन्त इत्युच्यन्ते ॥ ६४ ॥

येन च,—

अरिहंति वंदणणमंसणाणि अरिहंति पूयसक्कारं
अरिहंति सिद्धिगमणं अरहंता तेण उच्चंति ॥ ६५

अर्हंति वंदनानमस्कारयोः अर्हंति पूजासत्कारं।
अर्हंति सिद्धिगमनं अर्हंतः तेन उच्यंते ॥ ६५ ॥

वंदनाया नमस्कारस्य च योग्या वंदनां नमस्कारमर्हंति, पूजायाः सत्कारस्य च योग्याः पूजासत्कारमर्हन्ति च यतः सिद्धिगमनस्य च योग्याः सिद्धिगमनमर्हन्ति, यस्मात्तेनाऽर्हन्त इत्युच्यन्ते ॥ ६५ ॥

किमर्थमेते कीर्त्यन्त इत्याशंकायामाह,—

किह ते ण कित्तणिज्जा
सदेवमणुयासुरेहिं लोगेहिं ।
दंसणणाणचरित्ते
तव विणओ जेहिं पण्णत्तो ॥ ६६ ॥

कथं ते न कीर्तनीयाः सदेवमनुजासुरैः लोकैः ।
दर्शनज्ञानचरित्राणां तपसः विनयो यैः प्रज्ञप्तः ॥ ६६ ॥

कथं ते न कीर्तनीयाः व्यावर्णनीयाः सदेवमनुष्यासुरैर्लोकैर्दर्शनज्ञानचारित्रतपसां विनयो यैः प्रज्ञप्तः प्रतिपादितः ते चतुर्विंशतितीर्थंकराः कथं न कीर्तनीयाः ॥ ६६ ॥

इति कीर्तनमधिकारं व्याख्याय केवलिनां स्वरूपमाह—

सव्वं केवलकप्पं लोगं जाणंति तह य पस्संति।
केवलणाणचरित्ता तह्मा ते केवली होंति ॥ ६७

सर्वं केवलकल्पं लोकं जानंति तथा च पश्यंति ।
केवलज्ञानचरित्राः तस्मात् ते केवलिनो भवंति ॥

किमर्थं केवलिन इत्युच्यन्त इत्याशंकायामाह—यस्मात्सर्वं निरवशेषं केवलिकल्पं केवलज्ञानविषयं लोकमलोकं च जानन्ति तथा च पश्यंति केवलज्ञानमेव चारित्रं येषां ते केव-

लज्ञानचरित्राः परित्यक्ताशेषव्यापारास्तस्मात्ते केवलिनो भवंतीति ॥ ६७ ॥

अथोत्तमाः कथमित्याशंकायामाह—

मिच्छत्तवेदणीयं णाणावरणं चरित्तमोहं च ।
तिविहा तमाहु मुक्का तह्मा ते उत्तमा होंति ॥६८॥

मिथ्यात्ववेदनीयं ज्ञानावरणं चारित्रमोहं च ।
त्रिविधात् तमसो मुक्ताः तस्मात् ते उत्तमा भवंति ॥

मिथ्यात्ववेदनीयमश्रद्धानरूपं ज्ञानावरणं ज्ञानदर्शयोरावरणं चरित्रमोहश्चैतत्त्रिविधं तमस्तस्मान्मुक्ता यतस्तस्मात्ते उत्तमाः प्रकृष्टा भवंतीति ॥ ६८ ॥

त एवं विशिष्टा मम—

आरोग्ग बोहिलाहं दिंतु समाहिं च मे जिणवरिंदा
किं ण हु णिदाणमेयं णवरि विभासेत्थ कायव्वा

आरोग्यबोधिलाभं ददतु समाधिं च मे जिनवरेंद्राः
किं न खलु निदानमेतत् केवलविभाषात्र कर्तव्या॥

एवं विशिष्टास्ते जिनवरेन्द्रा महामारोग्यं जातिमरणाभावं बोधिलाभं च जिनसूत्रश्रद्धानं दीक्षाभिमुखीकरणं वा समाधिं च मरणकाले सम्यक्परिणामं ददतु प्रयच्छन्तु, किं

पुनरिदं निदानं न भवति न भवत्येव कस्माद्विभापाऽत्र विकल्पोऽत्र कर्तव्यो यस्मादिति ॥ ६९ ॥

एतस्माच्चेदं निदानं न भवति यतः—

भासा असच्चमोसा
णवरि हु भत्तीय भासिदा एसा।
ण हु खीणरागदोसा
दिंति समाहिं च बोहिं च ॥ ७० ॥

भाषा असत्यमृषा केवलं हि भक्त्या भाषिता एषा।
न हि क्षीणरागद्वेषा ददति समाधिं च बोधिं च ॥ ७० ॥

असत्यमृषा भाषेयं किंतु भक्त्या भाषितैषा यस्मान्नहि क्षीणरागद्वेषा जिना ददते समाधिं बोधिं च यदि दाने प्रवर्तेरन् सरागद्वेषाः स्युरिति ॥ ७० ॥

अन्यच्च——

जं तेहिं दु दादव्वं तं दिण्णं जिणवरेहिं सव्वेहिं।
दंसणणाणचरित्तस्स एस तिविहस्स उवदेसो ॥

यत् तैस्तु दातव्यं तद्दत्तं जिनवरैः सर्वैः।
दर्शनज्ञानचारित्राणां एष त्रिविधानामुपदेशः ॥ ७१ ॥

यत्तैस्तु दातव्यं तद्दत्तमेवं जिनवरैः सर्वैः किं तद्दर्शनज्ञा-

नचारित्राणां त्रिप्रकाराणां एव उपदेशोऽस्मार्त्किमधिकं यत्मा-
र्थ्यते। इति एषा च सामाधिबोधिप्रार्थना भक्तिर्भवति यतः ॥

अत आह;—

भत्तीए जिणवराणं खीयदि जं पुव्वसंचियं कम्मं ।
आयरियपसाएण य विज्जा मंता य सिज्झंति ॥
भक्त्या जिनवराणां क्षीयते यत् पूर्वसंचितं कर्म ।
आचार्यप्रसादेन च विद्या मंत्राश्च सिद्ध्यंति ॥ ७२ ॥

जिनवराणां भक्त्या पूर्वसंचितं कर्म क्षीयते विनश्यते य-
स्माद् आचार्याणां च भक्तिः किमर्थं ? आचार्याणां च
प्रसादेन विद्या मंत्राश्च सिद्धिमुपगच्छंति यस्मादिति त-
स्माज्जिनानामाचार्याणां च भक्तिरियं न निदानमिति ॥ ७२ ॥

अन्यच्च;—

अरहंतेसु य राओ ववगदरागेसु दोसरहिएसु ।
धम्मह्मि य जो राओ सुदे य जो बारसविधह्मि ॥
अर्हत्सु च रागः व्यपगतरागेषु दोषरहितेषु ।
धर्मे च यः रागः श्रुते च यो द्वादशविधे ॥ ७४ ॥

व्यपगतरागेष्वष्टादशदोषरहितेषु अर्हत्सु यः रागः या
भक्तिस्तथा धर्मे यो रागस्तथा श्रुते द्वादशविधे यः रागः
॥ ७३ ॥ तथा—

आयरियेसु य राओ
समणेसु य बहुसुदे चरित्तड्ढे ।
एसो पसत्थराओ
हवदि सरागेसु सव्वेसु ॥ ७४ ॥

आचार्येषु च रागः श्रमणेषु च बहुश्रुते चारित्राढ्ये।
एष प्रशस्तरागो भवति सरागेषु सर्वेषु ॥ ७४ ॥

आचार्येषु रागः श्रमणेषु बहुश्रुतेषु च यो रागश्चरित्रा-ढ्येषु च रागः स एष रागः प्रशस्तः शोभनो भवति सरागेषु सर्वेष्विति ॥ ७४ ॥

अन्यच्च;—

तेसिं अहिमुहदाए अत्था सिज्झंति तह य भत्तीए
तो भत्ति रागपुव्वं वुच्चइ एदं ण हु णिदाणं ॥

तेषां अभिमुखतया अर्थाः सिध्यंति तथा च भक्त्या।
तस्मात् भक्तिः रागपूर्वमुच्यते एतन्न खलु निदानं ॥

तेषां जिनवरादीनामभिमुखतया भक्त्या चार्था वांछितेष्टसिद्धयः सिध्यन्ति हस्तप्राप्ता भवन्ति यस्मात्तस्माद्भक्ती रागपूर्वकमेतदुच्यते न हि निदानं, संसारकारणाभावादिति ॥७५॥

चतुर्विंशतिस्तवविधानमाह—

चउरंगुलंतरपादो पडिलेहिय अंजलीकयपसत्थो।
अव्वाखित्तो वुत्तो कुणदियचउवीसत्थयं भिक्खू
चतुरंगुलांतरपादः प्रतिलिख्य अंजलीकृतप्रशस्तः।
अव्याक्षिप्त उक्तः करोति च चतुर्विंशतिस्तोत्रं भिक्षुः

चतुरंगुलानन्तरपाद स्थितांगः परित्यक्तशरीरावयव चालनश्चकारादेतल्लब्धं प्रतिलिख्य शरीरभूमिचित्तादिकं प्रशोध्य प्रांजलिः सपिंडः कृतांजलिपुटेन प्रशस्तः सौम्यभावोऽव्याक्षिप्तः सर्वव्यापाररहितः करोति चतुर्विंशतिस्तवं भिक्षुः संयतश्चतुरंगुलमंतरं ययोः पादयोस्तौ चतुरंगुलान्तरौ तौ पादौ यस्य स चतुरंगुलान्तरपादः स्थितं निश्चलमंगं यस्य सः स्थितांगः शोभनकायिकवाचिकमानसिकक्रिय इत्यर्थः ॥७६॥

चतुर्विंशतिस्तवनिर्युक्तिमुपसंहर्तुं वंदनानिर्युक्तिं च प्रतिपादयितुं माह;—

चउवीसयणिज्जुत्ती एसा कहिया मए समासेण
वंदणणिज्जुत्ती पुण एत्तो उड्ढं पवक्खामि ॥ ७६-
चतुर्विंशतिनिर्युक्तिः एषा कथिता मया समासेन।
वंदनानिर्युक्तिं पुनः इत ऊर्ध्वं प्रवक्ष्यामि ॥७७॥

चतुर्विंशतिनिर्युक्तिरेषा कथिता मया समासेन वंदनानिर्युक्तिं पुनरित ऊर्ध्वं प्रवक्ष्यामि प्रतिपादयिष्यामीति ७७-

तथैतां नामादिनिक्षेपैः प्रतिपादयन्नाह—

**णामट्ठवणा दव्वे खेत्ते काले य होदि भावे य ।**
**एसो खलु वंदणगे णिक्खेवो छव्विहो भणिदो ॥**

**नाम स्थापना द्रव्यं क्षेत्रं कालश्च भवति भावश्च ।**
**एष खलु वंदनाया निक्षेपः षड्विधो भणितः ॥७८॥**

एकतीर्थकरनामोच्चारणं सिद्धाचार्यादिनामोच्चारणं च नामावश्यकवंदनानिर्युक्तिरेकतीर्थकरप्रतिबिंबस्य सिद्धाचार्यादिप्रतिबिंबानां च स्तवनं स्थापनावंदनानिर्युक्तिस्तेषामेव शरीराणां स्तवनं द्रव्यवंदनानिर्युक्तिस्तैरेव यत्क्षेत्रमधिष्ठितं कालश्च योऽधिष्ठितस्तयोः स्तवनं क्षेत्रवन्दना कालवंदना च, एकतीर्थकरस्य सिद्धाचार्यादीनां च शुद्धपरिणामेन यद्गुणस्तवनं तद्भावावश्यकवंदनानिर्युक्तिः । नामाय वा जातिद्रव्यक्रियानिरपेक्षं संज्ञाकर्म वंदनाशब्दमात्रं नामवंदनापरिणतस्य प्रतिकृतं प्रतिवंदनास्थापनावंदनाव्यावर्णनप्राभृतज्ञोऽनुपयुक्त आगमद्रव्यवंदना शेषः पूर्ववदिति । एष वंदनाया निक्षेपः षड्विधो भवति ज्ञातव्यो नामादिभेदेनेति ॥ ७८ ॥

नामवंदनां प्रतिपादयन्नाह—

**किदियम्मं चिदियम्मं**
**पूयाकम्मं च विणयकम्मं च ।**

कादव्वं केण कस्स व
कधे व कहिं व कदिखुत्तो ॥ ७९ ॥

कृतिकर्म चितिकर्म पूजाकर्म च विनयकर्म च ।
कर्तव्यं केन कस्य वा कथं वा कस्मिन् वा कृतकृत्यः

पूर्वगाथार्धेन वंदनाया एकार्थः कथ्यतेऽपरार्द्धेन तद्विकल्प इति । कृत्यते छिद्यते अष्टविधं कर्म येनाक्षरकदंबकेन परिणामेन क्रियया वा तत्कृतिकर्म पापविनाशनोपायः । चीयते समेकीक्रियते संचीयते पुण्यकर्म तीर्थकरत्वादि येन तच्चितिकर्म पुण्यसंचयकारणं पूज्यंतेऽर्च्यन्तेऽर्हदादयो येन तत्पूजाकर्म बहुवचनोच्चारणस्रक्चंदनादिकं । विनीयंते निराक्रियन्ते संक्रमणोदयोदीरणादिभावेन प्राप्यंते येन कर्माणि तद्विनयकर्म शुश्रूषणं तत्क्रियाः कर्म कर्तव्यं केन कस्य कर्तव्यं कथमिव केन विधानेन कर्त्तव्यं यस्मिन्नवस्थाविशेषे कर्त्तव्यं कतिवारान् ॥ ७९ ॥

तथा;—

कदि ओणदं कदि सिरं
कदिए आवत्तगेहिं परिसुद्धं ।
कदिदोसविप्पमुक्कं
किदियम्मं होदि कादव्वं ॥ ८० ॥

किंयत्यवनतानि कति शिरांसि
कतिभिः आवर्तकैः परिशुद्धं ।
कतिदोषाविप्रमुक्तं
कृतिकर्म भवति कर्तव्यं ॥ ८० ॥

कदि ओणदं कियन्त्यवनतानि कति करमुकुलांकितेन शिरसा भूमिस्पर्शनानि कर्त्तव्यानि कदि सिरं कियन्ति शिरांसि कतिवारान् शिरसि करकुड्मलं कर्त्तव्यं कदि आवत्तगेहिं परिसुद्धं कियद्भिरावर्त्तकैः परिशुद्धं कतिवारान्मनोवचनकाया आवर्त्तनीयाः । कदि दोसविप्पमुक्कं कति दोषैर्विप्रमुक्तं कृतिकर्म भवति कर्त्तव्यमिति ॥ ८० ॥

इति प्रश्नमालायां कृतायां तावत्कृतिकर्मविनयकर्मणोरेकार्थ इति कृत्वा विनयकर्मणः सप्रयोजनां निरुक्तिमाह:—

जह्मा विणेदि कम्मं अट्ठविहं चाउरंगमोक्खो य ।
तह्मा वदंति विदुसो विणओत्ति विलीणसंसारा

यस्मात् विनयति कर्म अष्टविधं चातुरंगमोक्षश्च ।
तस्मात् वदंति विद्वांसो विनय इति विलीनसंसाराः

यस्माद्विनयति विनाशयति कर्माष्टविधं चातुरंगात्संसारान्मोक्षश्च यस्माद्विनयात्तस्माद्विद्वांसो विलीनसंसारा विनय इति वदंति ॥ ८१ ॥

यस्माच्च-

**पुव्वं चेव य विणओ परूविदो जिणवरेहिं सव्वेहिं**
**सव्वासु कम्मभूमिसु णिच्चं सो मोक्खमग्गम्मि ८२**

पूर्वस्मिन् चैव विनयः प्ररूपितो जिनवरैः सर्वैः ।
सर्वासु कर्मभूमिषु नित्यं स मोक्षमार्गे ॥

यतश्च पूर्वस्मिन्नेव काले विनयः प्ररूपितो जिनवरैः सर्वैः सर्वासु कर्मभूमिषु सप्तत्यधिकक्षेत्रेषु नित्यं सर्वकालं मोक्षमार्गे मोक्षमार्गहेतोस्तस्मान्नार्वाक्कालिको रथ्यापुरुषप्रणीतो वा शंकाऽत्र न कर्त्तव्या निश्चयेनात्र प्रवर्त्तितव्यमिति ॥

कतिप्रकारोऽसौ विनय इत्याशंकायामाह-

**लोगाणुवित्तिविणओ**
**अत्थणिमित्ते य कामतंते य ।**
**भयविणओ य चउत्थो**
**पंचमओ मोक्खविणओ य ॥ ८३**

लोकानुवृत्तिविनयः अर्थनिमित्तं च कामतंत्रं च ।
भयविनयश्च चतुर्थः पंचमः मोक्षविनयश्च ॥ ८३ ॥

लोकस्यानुवृत्तिरनुवर्त्तनं लोकानुवृत्तिर्नाम प्रथमो विनयः, अर्थस्य निमित्तमर्थनिमित्तं कार्यहेतुर्विनयो द्वितीयः, कामतंत्रे

कामतंत्रहेतुः कामानुष्ठाननिमित्तं तृतीयो विनयः, भयविनयश्चतुर्थः भयकारणेन यः क्रियते विनयः स चतुर्थः, पंचमो मोक्षविनयः; एवं कारणेन पंचप्रकारो विनय इति ॥ ८३ ॥

तत्रादौ तावल्लोकानुवृत्तिविनयस्वरूपमाह—

अब्भुट्ठाणं अंजलिआसणदाणं च अतिहिपूजा य
लोगाणुवित्तिविणओ देवदपूया सविहवेण ॥ ८४

अभ्युत्थानं अंजलिः आसनदानं च अतिथिपूजा च ।
लोकानुवृत्तिविनयः देवतापूजा स्वविभवेन ॥ ८४ ॥

अभ्युत्थानं कस्मिंश्चिदागते आसनादुत्थानं प्रांजलिरंजलिकरणं स्वावासमागतस्यासनदानं तथाऽतिथिपूजा च मध्याह्नकाले आगतस्य साधोरन्यस्य वा धार्मिकस्य बहुमानं देवतापूजा च स्वविभवेन स्ववित्तानुसारेण देवपूजा च तदेतत्सर्वं लोकानुवृत्तिर्नाम विनयः ॥ ८४ ॥

तथा—

भासाणुवत्ति छंदाणुवत्तणं देसकालदाणं च ।
लोकाणुवत्तिविणओ अंजलिकरणं च अत्थकदे

भाषानुवृत्तिः छंदानुवर्तनं देशकालदानं च ।
लोकानुवृत्तिविनयः अंजलिकरणं च अर्थकृते ॥ ८५ ॥

भाषाया वचनस्यानुवृत्तेरनुवर्त्तनं यथासौ वदति तथा सोऽपि भणति भाषानुवृत्तिः, छंदानुवर्त्तनं तदभिप्रायानुकूलाचरणं, देशयोग्यं कालयोग्यं च यद्दानं स्वद्रव्योत्सर्गस्तदेतत्सर्वं लोकानुवृत्तिविनयो लोकात्मीकरणार्थो यथार्थविनयोंजलिकरणादिकः प्रयुज्यते तथांऽजलिकरणादिको योऽर्थनिमित्तं क्रियते सोऽर्थहेतुः ॥ ८५ ॥

तथा—

एमेव कामतंते भयविणओ चेव आणुपुव्वीए।
पंचमओ खलु विणओ परूवणा तस्सिमा होदि

एवमेव कामतंत्रे भयविनयः चेव आनुपूर्व्या।
पंचमः खलु विनयः प्ररूपणा तस्येयं भवति ॥ ८६ ॥

यथा लोकानुवृत्तिविनयो व्याख्यातस्तथैवं कामतंत्रोभयार्थश्च भवति आनुपूर्व्या विशेषाभावात्, यः पुनः पंचमो विनयस्तस्येयं प्ररूपणा भवतीति ॥ ८६ ॥

दंसणणाणचरित्ते तवविणओ ओवचारिओ चेव
मोक्खह्मि एस विणओ पंचविहो होदि णायव्वो

दर्शनज्ञानचारित्रे तपसि विनयः औपचारिकश्चैव।
मोक्ष एष विनयः पंचविधो भवति ज्ञातव्यः॥ ८७ ॥

दर्शनज्ञानचारित्रतप औपचारिकभेदेन मोक्षविनय एषः पंचप्रकारो भवति ॥ ८७ ॥

स पंचाचारे यद्यपि विस्तरेणोक्तस्तथाऽपि विस्मरणशील-शिष्यानुग्रहार्थं सक्षेपतः पुनरुच्यत इति—

जे दव्वपज्जया खलु
उवदिट्ठा जिणवरेहिं सुदणाणे ।
ते तह सद्दहदि णरो
दंसणाविणओत्ति णादव्वो ॥ ८८ ॥

ये द्रव्यपर्यायाः खलु उपदिष्टा जिनवरैः श्रुतज्ञाने ।
तान् तथा श्रद्दधाति नरः दर्शनाविनय इति ज्ञातव्यः ॥

ये द्रव्यपर्यायाः खलूपदिष्टा जिनवरैः श्रुतज्ञाने तांस्तथैव श्रद्दधाति यो नरः स दर्शनविनय इति ज्ञातव्यो भेदोपचारादिति ॥ ८८ ॥

अथ ज्ञाने किमर्थं विनयः क्रियते इत्याशंकायामाह—

णाणी गच्छदि णाणी
वंचदि णाणी णवं च णादियदि ।
णाणेण कुणदि चरणं
तह्मा णाणे हवे विणओ ॥ ८९ ॥

ज्ञानी गच्छति ज्ञानी वंचति ज्ञानी नवं च नाददाति
ज्ञानेन करोति चरणं तस्मात् ज्ञानं भवेत् विनयः ॥

यस्माज्ज्ञानी गच्छति मोक्षं जानाति वा गतेर्ज्ञानगमन प्राप्तयर्थकत्वात्, यस्माच्च ज्ञानी वंचति परिहरति पापं यस्मा च्च ज्ञानी नव कर्म नाददाति न बध्यते कर्मभिरिति यस्माच्च ज्ञानेन करोति चरणं चारित्रं तस्माच्च ज्ञाने भवति विनयः कर्त्तव्य इति ॥ ८९ ॥

अथ चारित्रे विनयः किमर्थं क्रियत इत्याशंकायामाह—

पोराणय कम्मरयं चरिया रित्तं करेदि जदमाणो।
णवकम्मं ण य बंधदि चरित्तविणओत्ति णादव्वो॥
पौराणं कर्मरजः चर्यया रिक्तं करोति यतमानः।
नवकर्म न च बध्नाति चारित्रविनय इति ज्ञातव्यः॥

चिरंतनकर्मरजश्चर्यया चारित्रेण रिक्त तुच्छं करोति यतमानश्चेष्टमानो नवं कर्म च न बध्नाति यस्मात्, तस्माच्चा-रित्रे विनयो भवति कर्त्तव्य इति ज्ञातव्यः ॥ ९० ॥

तथा तपोविनयप्रयोजनमाह—

अवणयदि तवेण तमं
उवणयदि मोक्खमग्गमप्पाणं।

तवविणयणियमिदमदी
सो तवविणओ त्ति णादव्वो ॥

अपनयति तपसा तमः उपनयति मोक्षमार्गमात्मानं ।
तपोविनयनियमितमतिः स तपोविनय इति ज्ञातव्यः

इत्येवमादिगाथाना 'आयारजीदा' दिगाथापर्यन्तानां तप आचारेर्थः प्रतिपादित इति कृत्वा नेह प्रतन्यते पुनरुक्तदोषभयादिति ॥ ९१ ॥

यतो विनयः शासनमूलं यतश्च विनयः शिक्षाफलम्—

तह्मा सव्वपयत्ते विणयत्तं मा कदाइ छंडिज्जो ।
अप्पसुदो विय पुरिसो खवेदि कम्माणि विणएण ॥

तस्मात् सर्वप्रयत्नेन विनयत्वं मा कदापि त्यजेद् ।
अल्पश्रुतोपि च पुरुषः क्षपयति कर्माणि विनयेन ॥

यस्मात्सर्वप्रयत्नेन विनयत्वं नो कदाचित्परिहरेत् भवान् यस्मादल्पश्रुतोऽपि पुरुषः क्षपयति कर्माणि विनयेन तस्माद्विनयो न त्याज्य इति ॥ ९२ ॥

कृतिकर्मणः प्रयोजन तं दत्वा प्रस्तुतायाः प्रश्नमालायाः स्तावदसौ केन कर्तव्यं तत्कृतिकर्म यत्पृष्टं तस्योत्तरमाह—

पंचमहव्वयगुत्तो संविग्गोऽणालसो अमाणी य ।

किदियम्म णिज्जरट्ठी कुणइ सदा ऊणरादिणिओ॥
पंचमहाव्रतगुप्तः संविग्नः अनालसः अमानी च।
कृतिकर्म निर्जरार्थी करोति सदा ऊनरात्रिकः॥९३॥

पचमहाव्रतैर्गुप्तः पंचमहाव्रतानुष्ठानपरः संदिग्धो धर्मफलयोर्विषये हर्षोत्कंठितदेहो नालसः उद्योगवान् अमाणीय अमानी च परित्यक्तमानकषायो निर्जरार्थी ऊनरात्रिको दीक्षायां लघुर्यः एवं स कृतिकर्म करोति सदा सर्वकालं, पंचमहाव्रतयुक्तेन परलोकार्थिना विनयकर्म कर्त्तव्यं भवतीति संबंधः॥

कस्य तत्कृतिकर्म कर्त्तव्यं यत्पृष्टं तस्योत्तरमाह—

आइरियउवज्झायाणं पवत्तयत्थेरगणधरादीणं।
एदेसिं किदियम्मं कादव्वं णिज्जरट्ठाए॥ ९४॥
आचार्योपाध्यायानां प्रवर्तकस्थविरगणधरादीनां।
एतेषां कृतिकर्म कर्तव्यं निर्जरार्थं॥ ९४॥

तेषामाचार्योपाध्यायप्रवर्त्तकस्थविरगणधरादीनां कृतिकर्म कर्त्तव्यं निर्जरार्थं न मंत्रतंत्रोपकरणायेति॥ ९४॥

एते पुनः क्रियाकर्मायोग्या इति प्रतिपादयन्नाह—

णो वंदेज्ज अविरदं
मादा पिदु गुरु णरिंद अण्णतित्थं व।

देसविरद देवं वा
विरदो पासत्थपणगं वा ॥ ९५ ॥

नो वंदेत अविरतं मातरं पितरं गुरुं नरेंद्रं अन्यतीर्थंवा।
देशविरतं देवंवा विरतः पार्श्वस्थपंचकं वा ॥ ९५ ॥

णो वंदेज्ज न वंदेत न स्तुयात् कं अविरदमविरतमसंयतं मातरं जननीं पितरं जनकं गुरु दीक्षागुरुं श्रुतगुरुमप्यसंयतं चरणादिशिथिलं नरेन्द्र राजानं अन्यतीर्थिकं पाखंडिनं वा देशविरतं श्रावक शास्त्रादिप्रौढमपि देव वा नागयक्षचन्द्रसूर्येन्द्रादिकं वा विरतः संयतः सन् पार्श्वस्थपणकं वा ज्ञानदर्शनचारित्रशिथिलान्पंचजनान्निर्ग्रन्थानपि संयतः स्नेहादिना पार्श्वस्थपणकं न वंदेत मातरमसंयतां पितरमसंयतं अन्यं च मोहादिना न स्तुयात् भयेन लोभादिना वा नरेन्द्रं न स्तुयात् ग्रहादिपीडाभयादेवं सूर्यादिकं न पूजयेत् शास्त्रादिलोभेनान्यतीर्थिकं न स्तुयादाहारादिनिमित्तं श्रावकं न स्तुयात्। आत्मगुरुमपि विनष्ट न वदेत तथा वाशब्दसूचितानन्यानपि स्वोपकारिणोऽसंयतान्न स्तुयादिति ॥ ९५ ॥

इति के ते पंच पार्श्वस्था इत्याशंकायामाह—

पासत्थो य कुसीलो संसत्तोसण्ण मिगचरित्तो यं।
दंसणणाणचरित्ते अणिउत्ता मंदसंवेगा॥ ९६ ॥

पार्श्वस्थश्च कुशीलः संसक्तोऽपसंज्ञो मृगचारित्रश्च ।
दर्शनज्ञानचारित्रे अनियुक्ता मंदसंवेगाः ॥ ९६ ॥

संयतगुणेभ्यः पार्श्वे अभ्यासे तिष्ठतीति पार्श्वस्थः वसतिकादिप्रतिबद्धो मोहबहुलो रात्रिदिवमुपकरणानां कारकोऽसंयतजनसेवी संयतजनेभ्यो दूरीभूतः, कुत्सितं शीलं आचरणं स्वभावो वा यस्यासौ कुशीलः क्रोधादिकलुषितात्मा व्रतगुणशीलैश्च परिहीनः संघस्यायशःकरणकुशलः, सम्यगसंयतगुणेष्वाशक्तः संशक्तः आहारादिगृद्धया वैद्यमंत्रज्योतिषादिकुशलत्वेन प्रतिबद्धो राजादिसेवातत्परः, ओसण्णोऽपगतसंज्ञोऽपगता विनष्टा संज्ञा सम्यग्ज्ञानादिकं यस्यासौ अपगतसंज्ञश्च रित्राद्यपहीनो जिनवचनमजानञ्चारित्रादिप्रभ्रष्टः करणालसः सांसारिकसुखमानसः, मृगस्येव पशोरिव चरित्रमाचरणं यस्यासौ मृगचरित्रः परित्यक्ताचार्योपदेशः स्वच्छन्दगतिरेकाकी जिनसूत्रदूषणस्तपःसूत्राद्यविनीतो धृतिरहितश्चेत्येते पंच पार्श्वस्था दर्शनज्ञानचारित्रेषु अनियुक्ताश्चारित्राद्यनुष्ठानपरा मंदसंवेगास्तीर्थधर्मायकृतहर्षाः सर्वदा न वंदनीया इति ॥ ९६ ॥

पुनरपि स्पष्टमवन्दनायाः कारणमाह—

दंसणणाणचरित्ते तवविणए णिच्चकाल पासत्था ।
एदे अवंदणिज्जा छिद्दप्पेही गुणधराणं ॥ ९७ ॥

दर्शनज्ञानचारित्रतपोविनयेभ्यः नित्यकालं पार्श्वस्थाः
एते अवंदनीयाः छिद्रप्रेक्षिणो गुणधराणाम् ॥ ९७ ॥

दर्शनज्ञानचारित्रतपोविनयेभ्यो नित्यकालं पार्श्वस्था दूरीभूता यतो त एते न वदनीयाश्छिद्रप्रेक्षिणः सर्वकालं गुणधराणां च छिद्रान्वेषिणः संयतजनस्य दोषोद्भाविनो यतो न वदनीया एतेऽन्ये चेति ॥ ९७ ॥

के तर्हि वंद्यंतेऽत आह—

समणं वंदेज्ज मेधावी संजतं सुसमाहिदं ।
पंचमहव्वदकलिदं असंजमजुगंछयं धीरं ॥ ९८ ॥

श्रमणं वंदेत मेधाविन् संयतं सुसमाहितं ।
पंचमहाव्रतकलितं असंयमजुगुप्सकं धीरं ॥ ९८ ॥

हे मेधाविन् ! चारित्राद्यनुष्ठानतत्पर ! श्रमणं निर्ग्रन्थरूपं वंदेत पूजयेत् किंविशिष्टं संयतं चारित्र द्यनुष्ठानतनिष्ठं पुनरपि किंविशिष्टं सुसमाहितं ध्यानाध्ययनतत्पर क्षमादिसहितं पंचमहाव्रतकलितं असंयमजुगुप्सकं मार्गेन्द्रियसंयमपरं धीरं धैर्योपेतं चागमभावनाशीलं सर्वगुणोपेतमेवं विशिष्टं स्तुयादिति

तथा—

दंसणणाणचरित्ते तवविणए णिच्चकालमुवजुत्ता

एदे खु वंदणिज्जा जे गुणवादी गुणधराणं ॥ ९९ ॥

दर्शनज्ञानचारित्रे तपोविनयेषु नित्यकालमुपयुक्ताः।
एते खलु वंदनीया ये गुणवादिनः गुणधराणाम् ९९

दर्शनज्ञानचारित्रतपोविनयेषु नित्यकालमभीक्ष्णमुपयुक्ताः सुष्ठु निरता ये ते एते वंदनीया गुणधराणां शीलधराणां च गुणवादिनो ये च ते वंदनीया इति ॥ ९९ ॥

संयतमप्येवं स्थितमेतेषु स्थानेषु न वंदेतेत्याह—

वाखित्तपराहुत्तं तु पमत्तं मा कदाइ वंदिज्जो ।
आहारं च करंतो णीहारं वा जदि करेदि १००॥

व्याक्षिप्तपरावृत्तं तु प्रमत्तं मा कदाचित् वंदेत ।
आहारं च कुर्वंतं नीहारं वा यदि करोति ॥ १०० ॥

व्याक्षिप्तं ध्यानादिनाकुलचित्तं परावृत्तं पराङ्मुखं पृष्ठदेशतः स्थितं प्रमत्तं निद्राविकथादिरतं मा कदाचिद् वन्देज्ज नो वंदेत संयतमिति संबंधस्तथाऽऽहारं च कुर्वन्तं भोजनक्रियां कुर्वाणं नीहारं वा मूत्रपुरीषादिकं यदि करोति तदाऽपि नो कुर्वीत वंदनां साधुरिति ॥ १०० ॥

केन विधानेन स्थितो वद्यत इत्याशंकायामाह—

आसणे आसणत्थं च उवसंतं च उवट्ठिदं ।

अणुविण्णय मेधावी किदियम्मं पउंजदे ॥१०१॥
आसने आसनस्थं च उपशांतं च उपस्थितं।
अनुविज्ञाप्य मेधावी कृतिकर्म प्रयुंक्ते ॥ १०१ ॥

आसने विविक्तभूप्रदेशे आसनस्थं पर्यंकादिना व्यवस्थितं अथवा आसने आसनस्थमव्याक्षिप्तपराङ्मुखमुपशांतं स्वस्थचित्तं उपस्थितं वंदनां कुर्वीत स्थितं अनुविज्ञाप्य वंदनां करोमीति संबोध्य मेधावी प्राज्ञोऽनेन विधानेन कृतिकर्म प्रारभेत प्रयुंजीत विदधीतेत्यर्थः ॥ १०१ ॥

कथमिव गत सूत्रं वंदनायाः स्थानमित्याह—

आलोयणाय करणे पडिपुच्छा पूजणे य सज्झाए।
अवराधे य गुरूणं वंदणमेदेसु ठाणेसु ॥ १०२ ॥
आलोचनायाः करणे प्रतिपृच्छायां पूजने च स्वाध्याये
अपराधे च गुरूणां वंदनमेतेषु स्थानेषु ॥ १०२ ॥

आलोचनायाः करणे आलोचनाकालेऽथवा करणे षडावश्यककाले परिप्रश्ने प्रश्नकाले पूजने पूजाकाले च स्वाध्याये स्वाध्यायकालेऽपराधे क्रोधाद्यपराधकाले च गुरूणामाचार्योपाध्यायादीनां वंदनैतेषु स्थानेषु कर्तव्येति ॥ १०२ ॥

"कस्मिन्स्थाने" पदेनत्सूत्रं व्यापितं तद्व्याख्यातमि-

दानीं कतिवारं कृतिकर्म कर्तव्यमिति यत्सूत्रं स्थापितं तद्व्याख्यानायाह—

चत्तारि पडिक्कमणे
किदियम्मा तिण्णि होंति सज्झाए।
पुव्वण्हे अवरण्हे
किदियम्मा चोद्दसा होंति ॥ १०३ ॥

चत्वारि प्रतिक्रमणे कृतिकर्माणि त्रीणि स्वाध्याये।
पूर्वाह्णे अपराह्णे कृतिकर्माणि चतुर्दश भवंति १०३

सामायिकस्तवपूर्वककायोत्सर्गश्चतुर्विंशतितीर्थकरस्तवपर्यन्तः कृतिकर्मेत्युच्यते। प्रतिक्रमणकाले चत्वारि क्रियाकर्माणि स्वाध्यायकाले च त्रीणि क्रियाकर्माणि भवंत्येवं पूर्वाह्णे क्रियाकर्माणि सप्त तथाऽपराह्णे च क्रियाकर्माणि सप्तैवं पूर्वाह्णेऽपराह्णे च क्रियाकर्माणि चतुर्दश भवंतीति। कथं प्रतिक्रमणे चत्वारि क्रियाकर्माणि, आलोचनाभक्तिकरणे कायोत्सर्ग एकं क्रियाकर्म तथा प्रतिक्रमणभक्तिकरणे कायोत्सर्गः द्वितीयं क्रियाकर्म तथा वीरभक्तिकरणे कायोत्सर्गस्तृतीयं क्रियाकर्म तथा चतुर्विंशतितीर्थकरभक्तिकरणे शांतिहेतोः कायोत्सर्गश्चतुर्थं क्रियाकर्म। कथं च स्वाध्याये त्रीणि क्रियाकर्माणि, श्रुतभक्तिकरणे कायोत्सर्ग एकं क्रियाकर्म तथाऽऽ-

चार्यभक्तिक्रियाकरणे द्वितीयं क्रियाकर्म तथा स्वाध्यायोपसंहारे श्रुतभक्तिकरणे कायोत्सर्गस्तृतीयं क्रियाकर्मैवं जातिमपेक्ष्य त्रीणि क्रियाकर्माणि भवंति स्वाध्याये शेषाणां वंदनादिक्रियाकर्मणामत्रैवान्तर्भावो द्रष्टव्यः । प्रधानपदोच्चारणं कृतं यतः पूर्वाह्ने दिवस इति एवमपराह्ने रात्रावपि द्रष्टव्यं भेदाभावात् अथ वा पश्चिमरात्रौ प्रतिक्रमणे क्रियाकर्माणि चत्वारि स्वाध्याये त्रीणि वंदनायां द्वे, सवितर्युदिते स्वाध्याये त्रीणि मध्याह्नवंदनायां द्वे एवं पूर्वाह्णक्रियाकर्माणि चतुर्दश भवन्ति; तथाऽपराह्णवेलायां स्वाध्याये त्रीणि क्रियाकर्माणि प्रतिक्रमणे चत्वारि वंदनायां द्वे योगभक्तिग्रहणोपसंहारकालयोः द्वे रात्रौ प्रथमस्वाध्याये त्राणि । एवमपराह्णक्रियाकर्माणि चतुर्दश भवति प्रतिक्रमणस्वाध्यायकालयोरुपलक्षणत्वादिति, अन्यान्यपि क्रियाकर्माण्यत्रैवान्तर्भवन्ति नाव्यापकत्वमिति सबन्धः । पूर्वाह्णसमीपकालः पूर्वाह्ण इत्युच्यतेऽपराह्णसमीपकालोऽपराह्ण इत्युच्यते तस्मान्न दोष इति॥१०३॥

कत्यवनतिकरणमित्यादि यत्पृष्टं तदर्थमाह—

**दोणदं तु जघाजादं बारसावत्तमेव य।**
**चदुस्सिरं तिसुद्धं च किदियम्मं पउंजदे॥१०४॥**

द्व्यवनतिस्तु यथाजातं द्वादशावर्तमेव च ।
चतुःशिरः त्रिशुद्धं च कृतिकर्म प्रयुंजते ॥ १०४ ॥

दोणदं द्वे अवनती पंचनमस्कारादावेकावनतिर्भूमिसंस्पर्शस्तथा चतुर्विंशतिस्तवादौ द्वितीयाऽवनतिः शरीरनमनं द्वे अवनती जहाजादं यथाजातं जातरूपसदृशं क्रोधमानमायासंगादिरहितं वारसावत्तमेव य द्वादशावर्त्ता एव च पंचनमस्कारोच्चारणादौ मनोवचनकायानां संयमनानि शुभयोगवृत्तयस्त्रय आवर्त्तास्तथा पंचनमस्कारसमाप्तौ मनोवचनकायानां शुभवृत्तयस्त्रीण्यन्यान्यावर्त्तनानि तथा चतुर्विंशतिस्तवादौ मनोवचनकायाः शुभवृत्तयस्त्रीण्यपराण्यावर्त्तनानि तथा चतुर्विंशतिस्तवसमाप्तौ शुभमनोवचनकायवृत्तयस्त्रीण्यावर्त्तनान्येवं द्वादशधा मनोवचनकायवृत्तयो द्वादशावर्त्ता भवंति, अथवा चतसृषु दिक्षु चत्वारः प्रणामा एकस्मिन् भ्रमणे एवं त्रिषु भ्रमणेषु द्वादश भवंति, चदुस्सिरं चत्वारि शिरांसि पंचनमस्कारस्यादावंते च करमुकुलांकितशिरःकरणं तथा चतुर्विंशतिस्तवस्यादावंते च करमुकुलांकितशिरःकरणमेवं चत्वारि शिरांसि भवंति, त्रिशुद्धं मनोवचनकायशुद्धं क्रियाकर्म प्रयुंक्ते करोति। द्वे अवनती यस्मिन्तत् द्व्यवनति क्रियाकर्म द्वादशावर्त्ताः यस्मिंस्तत् द्वादशावर्त्तं मनोवचनकायशुद्धया चत्वारि शिरांसि यस्मिन् तत् चतुःशिरः क्रियाकर्म यविशिष्टं यथाजातं कर्म प्रयुंजीतेति ॥ १०४ ॥

पुनरपि क्रियाकर्मप्रयुंजनविधानमाह—

**तिविहं तियरणसुद्धं**

मयरहियं दुविहठाण पुणरुत्तं ।
विणएण कमविसुद्धं
किदियम्मं होदि कायव्वं ॥१०५॥

त्रिविधं त्रिकरणशुद्धं मदरहितं द्विविधस्थानं पुनरुक्तं
विनयेन क्रमविशुद्धं कृतिकर्म भवति कर्तव्यं ॥१०५॥

त्रिविधं ग्रंथार्थोभयभेदेन त्रिप्रकारं, अथवाऽवनतिद्वयमेकः प्रकारः द्वादशावर्त्तः द्वितीयः प्रकारश्चतुःशिरस्तृतीयं विधानमेवं त्रिविधं, अथ वा कृतकारितानुमतिभेदेन त्रिविधं, अथवा प्रतिक्रमणस्वाध्यायवन्दनाभेदेन त्रिविधं, अथवा पंचनमस्कारध्यानचतुर्विंशतिस्तवभेदेन त्रिविधमिति । त्रिकरणशुद्धं मनोवचनकायाशुभक्रियाविमुक्तं, अथ वाऽवनतिद्वयद्वादशावर्तचतुःशिरःक्रियाभिः शुद्धं । मदरहितं जात्यादिमदहीनं । द्विविधस्थानं द्वे पर्यंककायोत्सर्गौ स्थाने यस्य तत् द्विविधं स्थानं । पुनरुक्तं क्रियां क्रियां प्रति तदेव क्रियत इति पुनरुक्तं, विनयेन विनयपुक्तया क्रमविशुद्धं क्रमपननिलंघ्यागमानुसारेण कृतिकर्म भवति कर्तव्यं । न पुनरुक्तो दोषो द्रव्यार्थिकपर्यायार्थिकशिष्यसंग्रहणादिति ॥ १०५ ॥

कति दोषविप्रमुक्तं कृतिकर्म भवति कर्तव्यमिति यत्पृष्टं तदर्थमाह—

अणाठिदं च थद्धं च पविट्ठं परिपीडिदं।
दोलाइयमंकुसियं तहा कच्छभरिंगियं॥ १०६॥

अनादृतं च स्तब्धश्च प्रविष्टः परिपीडितं।
दोलायितमंकुशितस्तथा कच्छपरिंगितं १०६

अनाठिदमनादृतं विनादरेण संभ्रममंतरेण यत् क्रियाकर्म क्रियते तदनादृतमित्युच्यते अनादृतनामा दोषः। थद्धं च स्तब्धश्च विद्यादिगर्वेणोद्धतः सन् यः करोति क्रियाकर्म तस्य स्तब्धनामा दोषः, पविट्ठं प्रविष्टः पंचपरमेष्ठिनामत्यासन्नो भूत्वा यः करोति कृतिकर्म तस्य प्रविष्टदोषः, परिपीडिदं परिपीडितं करजानुप्रदेशैः परिपीड्य संस्पर्श्य यः करोति वंदनां तस्य परिपीडितदोषः, दोलायिदं-दोलायितं दोलामिवात्मानं चलाचलं कृत्वा शयित्वा वा यो विदधाति वन्दनां तस्य दोलायितदोषः अंकुसियं अंकुशितमंकुशमिव करांगुष्ठं ललाटदेशे कृत्वा यो वन्दनां करोति तस्यांकुशितदोषः, तथा कच्छभरिंगियं कच्छपरिंगितं चेष्टितं कटिभागेन कृत्वा यो विदधाति वन्दनां तस्य कच्छपरिंगितदोषः॥ १०६॥

तथा—

मच्छुव्वत्तं मणोदुट्ठं वेदिआवद्धमेव य।
भयसा चेव भयत्तं इड्ढिगारव गारवं॥ १०७॥

मत्स्योद्वर्तो मनोदुष्टो वेदिकाबद्ध एव च ।
भयेन च विभ्यत्त्व ऋद्धिगौरवं गौरवं ॥ १०७ ॥

मत्स्योद्वर्तः पार्श्वद्वयेन वन्दनाकरणमथवा मत्स्यस्य इव कटिभागेनोद्वर्त्तं कृत्वा यो वंदना विदधाति तस्य मत्स्योद्वर्त्त-दोषः, मनसाचार्यादीनां दुष्टो भूत्वा यो वंदना करोति तस्य मनोदुष्टदोषः संक्लेशयुक्तेन मनसा यद्वा वदनाकरणं, वेदिया वद्धमेव य वेदिकावद्ध एव च वेदिकाकारेण हस्ताभ्यां बंधो हस्तपंजरेण वामदक्षिणस्तनप्रदेश मपीड्य जानुद्वय वा प्रबद्ध्य वदनाकरण वेदिकाबद्धदोषः, भयसा चैव भयेन चैव मरणा दिभीतस्य भयसत्रस्तस्य यद्वदनाकरणं भयदोषः भयतो वि भ्यतो गुर्वादिभ्यो विभ्यतो भय माप्नुवतः परमार्थात्परस्य वा लस्वरूपस्य वदनाभिधानं विभ दोषः, ऋद्धिगारव ऋद्धिगौरव वदनामनुर्वतो महापरिश्ररश्चातुर्वर्ण्यश्रमणसघो भक्तो भवत्येव मभिप्रायेण यो वंदना विदधाति तस्य ऋद्धिगौरवदोषः, गा रवं गौरवं आत्मनो माहात्म्यासनादिभिराविःकृत्य रससुखहे तोर्वा यो वंदना करोति तस्य गौरववंदनादोषः ॥ १०७ ॥

तथा—

तेणिदं पडिणिदं चावि पदुट्ठं तज्जिदं तधा ।
सद्दं च हीलिदं चावि तह तिवलिदकुंचिदं १०८
स्तेनितं प्रतिनीतं चापि प्रदुष्टस्तर्जितं तथा ।

शब्दश्च हीलितं चापि तथा त्रिवालितं कुंचितं १०८

तेणिदं स्तेनितं चौरबुद्धया यथा गुर्वादयो न जानंति बन्दनादिकमपवरकाभ्यन्तरं प्रविश्य वा परेषां वंदनां चोरयित्वा यः करोति वंदनादिकं तस्य स्तेनितदोषः, पडिणिदं प्रतिनीतं देवगुर्वादीनां प्रतिकूलो भूत्वा यो वंदनां विदधाति तस्य प्रतिनीतदोषः, पदुट्ठं प्रदुष्टोऽन्यैः सह प्रद्वेषं वैरं कलहादिकं विधाय क्षंतव्यमकृत्वा यः करोति क्रियाकलापं तस्य प्रदुष्टदोषः। तज्जिदं तर्जितं तथा अन्यांस्तर्जयन्नन्येषां भयमुत्पादय न्यदि वन्दनां करोति तदा तर्जितदोषस्तस्याथ वाऽचार्यादिभिरंगुल्यादिना तर्जितः शासितो यदि "नियमादिकं न करोषि निर्वासयामो भवन्त" मिति तर्जितो यः करोति तस्य तर्जितदोषः, सद्दं च शब्दं ब्रुवाणो यो वन्दनादिकं करोति मौनं परित्यज्य तस्य शब्ददोषोऽथ वा सट्ठ चेति पाठस्तत एवं ग्राह्य शाठ्येन मायाप्रपंचेन यो वन्दनां करोति तस्य शाठ्यदोषः हीलिदं हीलितं वचनेनाचार्यादीनां परिभवं कृत्वा यः करोति वन्दनां तस्य हीलितदोषः, तह तिवलिदं तथा त्रिवलितं शरीरस्य त्रिषु कटिहृदयग्रीवाप्रदेशेषु भगं कृत्वा ललाटदेशे वा त्रिवलिं कृत्वा यो विदधाति वन्दनां तस्य त्रिवलितदोषः, कुंचिद कुचितं कुंचितहस्ताभ्यां शिरः परामर्शं कुर्वन् यो वन्दनां विदधाति जानुमध्ययोर्वा शिरः कृत्वा संकुचितो भूत्वा यो वन्दनां करोति तस्य संकुचितदोषः १०८

तथा—

**दिट्ठमदिट्ठं चावि य संगस्स करमोयणं ।**
**आलद्धमणालद्धं च हीणमुत्तरचूलियं ॥ १०९ ॥**

दृष्टः अदृष्टश्चापि च संघस्य करमोचनं ।
आलब्धः अनालब्धश्च हीनमुत्तरचूलिका ॥१०९॥

दिट्ठं दृष्टं आचार्यादिभिर्दृष्टः सन् सम्यग्विधानेन वंदनादिकं करोत्यन्यथा स्वेच्छयाऽथवा दिगवलोकनं कुर्वन् वन्दनादिकं यदि विदधाति तदा तस्य दृष्टो दोषः, अदिट्ठं अदृष्टं आचार्यादीनां दर्शनं पृथक् त्यक्त्वा भूप्रदेशं शरीरं चाप्रतिलेख्यातद्गतमनाः पृष्ठदेशतो वा भूत्वा यो वन्दनादिकं करोति तस्यादृष्टदोषः, अपि च संगस्स करमोयणं संघस्य करमोचनं संघस्य मायाकरो दृष्टिर्दातव्योऽन्यथा न ममोपरि संघः शोभनः स्यादिति ज्ञात्वा यो वन्दनादिकं करोति तस्य संघकरमोचनदोषः। आलद्धमणालद्धं उपकरणादिकं लब्ध्वा यो वंदनां करोति तस्य लब्धदोषः अणालद्धं–अनालब्धं उपकरणादिकं लप्स्येऽहमिति बुद्ध्या यः करोति वन्दनादिकं तस्यानालब्धदोषः, हीण हीनं प्रमाणकालमपाणरहिता वन्दना यः करोति तस्य हीनदोषः, उत्तरचूलिय उत्तरचूलिकां वन्दना स्तोकेन कालेन निर्वर्त्य वन्दनायाश्चूलिकाभूतस्यालोचनादिकस्य महता कालेन निर्वर्तकं कृत्वा यो वन्दनां नि-

दधाति तस्योत्तरचूलिकादोषः ॥ १०९ ॥

तथा—

**मूगं च दद्दुरं चावि चुलुलिदमपच्छिमं ।**
**बत्तीसदोसाविसुद्धं किदियम्मं पउंजदे ॥ ११० ॥**

मूकश्च दर्दुरं चापि चुलुलितमपश्चिमं ।
द्वात्रिंशद्दोषविशुद्धं कृतिकर्म प्रयुंक्ते ॥ ११० ॥

मूगं च मूकश्च मूक इव मुखमध्ये यः करोति वंदनामथ वा वन्दनां कुर्वन् हुंकारांगुल्यादिभिः संज्ञां च यः करोति तस्य मूकदोषः, दद्दुरं दर्दुरं आत्मीयशब्देनान्येषां शब्दानभिभूय महाकलकलं वृहद्गलेन कृत्वा यो वन्दनां करोति तस्य दर्दुरदोषः, अविचुलुलिदमपच्छिमं अपि चुरुलितमपश्चिमं एकस्मिन्प्रदेशे स्थित्वा करमुकुलं संभ्राम्य सर्वेषां यो वन्दनां करोत्यथ वा पंचमादिस्वरेण यो वन्दनां करोति तस्य चुरुलितदोषो भवत्यपश्चिमः एतैर्द्वात्रिंशद्दोषैः परिशुद्धं विमुक्तं यदि कृतिकर्म प्रयुंक्ते करोति साधुस्ततो विपुलनिर्जराभागी भवति ॥ ११० ॥

यदि पुनरेवं करोति तदा—

**किदियम्मंपि करंतो**
**ण होदि किदयम्मणिज्जराभागी ।**

बत्तीसाणण्णदरं
साहू ठाणं विराधंतो ॥ १११ ॥

कृतिकर्मापि कुर्वन् न भवति कृतिकर्मनिर्जराभागी ।
द्वात्रिंशतामन्यतरं साधुः स्थानं विराधयन् ॥ १११ ॥

कृतिकर्म कुर्वन्नपि न भवति कृतिकर्मनिर्जराभागी कृतिकर्मणा या कर्मनिर्जरा तस्याः स्वामी न स्यात्, यदि द्वात्रिंशद्दोषेभ्योऽन्यतर स्थानं दोषं निवारयन्नाचरन् क्रियाकर्म कुर्यात्साधुरिति अथवा द्वात्रिंशद्दोषेभ्योऽन्यतरेण दोषेण स्थानं कायोत्सर्गादिवन्दनां विराधयन्कुर्वीतेति ॥ १११ ॥

कथं तर्हि वन्दनां कुर्वीत साधुरित्याह—

हत्थंतरेणबाधे संफासपमज्जणं पउजंतो ।
जाएंतो वंदणयं इच्छाकारं कुणइ भिक्खू ॥११२॥

हस्तांतरे अनाबाधे संस्पर्शप्रमार्जनं प्रयुंजानः ।
याचमानो वंदनां इच्छाकारं करोति भिक्षुः ॥ ११२

हस्तान्तरेण हस्तमात्रान्तरेण यस्य वन्दना क्रियते यश्च करोति तयोरन्तरं हस्तमात्रं भवेत् तस्मिन् हस्तान्तरे स्थित्वा ऽणाबाधेऽनाबाधे बाधामन्तरेण संफासपमज्जणं स्वस्य स्वदेहस्य स्पर्शः संस्पर्शनं कटिगुह्यादिकं च तस्य प्रमार्जनं प्रतिलेखनं शुद्धिं पउंजंतो प्रयुंजानः प्रदर्पेण कुर्वन् जाएंतो वन्द-

णयं वंदना च याचमानो 'भवद्भयो वंदनां विदधामि' इति याञ्चां कुर्वन्निच्छाकारवन्दनामग्राणं करोति भिक्षुः साधुरेवं द्वात्रिंशद्दोषपरिहारेण तावत् द्वात्रिंशद् गुणा भवंति तस्माद्यत्नपरेण हास्यभयासादनारागद्वेषगौरवालस्यमदलोभस्तेनभावप्रातिकूल्यबालत्वोपरोधहीनाधिकभावशरीरपरामर्शवचनभृकुटिकरणखाट्करणादिवर्जनपरेण देवत दिगतमानसेन विवर्जितकार्यान्तरेण विशुद्धमनोवचनकाययोगेन मौनपरेण वंदना करणीया वन्दनाकारकेणेति ॥ ११२ ॥

यस्य क्रियते वन्दना तेन कथं प्रत्येषितव्येत्याह—

**तेण च पडिच्छिदव्वं गारवरहिएण सुद्धभावेण ।**
**किदियम्मकारकस्सवि संवेगं संजणंतेण ॥ ११३**

**तेन च प्रत्येषितव्यं गर्वरहितेन शुद्धभावेन ।**
**कृतिकर्मकारकस्यापि संवेगं सजनयता ॥ ११३ ॥**

तेण च तेनाचार्येण पडिच्छिदव्वं प्रत्येषितव्यमभ्युगन्तव्यं गौरवरहितेन ऋद्धिवीर्यादिगर्वरहितेन कृतिकर्मकारकस्य वन्दनायाः कर्तुरपि सवेगधर्मे धर्मफले च हर्षं संजनयता सम्यग्विधानेन कारयता शुद्धपरिणामवता वन्दनाऽभ्युपगन्तव्येति ॥ ११३ ॥

वन्दनानिर्युक्तिं संक्षेपयन् प्रतिक्रमणे निर्युक्तिं सूचयन्नाह--

**वंदणणिज्जुत्ती पुण एसा कहिया मए समासेण ।**

पडिकमणणिजुत्ती पुण एतो उड्ढं पवक्खामि ॥

वंदनानिर्युक्तिः पुनः एषा कथिता मया समासेन ।
प्रतिक्रमणनिर्युक्तिं पुनः इत ऊर्ध्वं प्रवक्ष्यामि॥११४॥

वंदनानिर्युक्तिरेषा पुनः कथिता मया संक्षेपेण प्रतिक्रमणनिर्युक्तिं पुनरित ऊर्ध्वं वक्ष्य इति ॥ ११४ ॥

नां निक्षेपस्वरूपेणाह—

णामट्ठवणा दव्वे खेत्ते काले तहेव भावे य ।
एसो पडिकमणगे णिक्खेवो छव्विहो णेओ ॥

नाम स्थापना द्रव्यं क्षेत्रं कालस्तथैव भावश्च ।
एष प्रतिक्रमणके निक्षेपः षड्विधो ज्ञेयः ॥ ११५ ॥

नामप्रतिक्रमणं पापहेतुनामातीचारान्निवर्त्तनं प्रतिक्रमणदंडकगतशब्दोच्चारणं वा, सरागस्थापनाभ्यः परिणामनिवर्त्तनं स्थापनाप्रतिक्रमणं सावद्यद्रव्यसेवायाः परिणामस्य निवर्त्तनं द्रव्यप्रतिक्रमणं । क्षेत्राश्रितातिचारान्निवर्त्तनं क्षेत्रप्रतिक्रमणं, कालमाश्रितातीचारान्निवृत्तिः कालप्रतिक्रमणं, रागद्वेषाद्याश्रितातीचारान्निवर्त्तनं भावप्रतिक्रमणमेष नामस्थापनाद्रव्यक्षेत्रकालभावाश्रितातीचारनिवृत्तिविषयः प्रतिक्रमणे निक्षेपः षड्विधो ज्ञातव्य इति । अथवा नामप्रतिक्रमणं नाममात्रं, प्रतिक्रमणपरिणतस्य प्रतिबिंबस्थापना स्थापनाप्रतिक्रमणं, प्रति-

क्रमणप्राभृतज्ञोप्यनुपयुक्त आगमद्रव्यप्रतिक्रमणं, तच्छरीरादिकं नोआगमद्रव्यप्रतिक्रमणमित्येवमादि पूर्ववद्द्रष्टव्यमिति॥

प्रतिक्रमणभेदं प्रतिपादयन्नाह—

पडिकमणं देवसियं रादिय इरियापधं च बोधव्वं।
पक्खिय चादुम्मासिय संवच्छरमुत्तमट्ठं च ॥११६॥

प्रतिक्रमणं दैवसिकं रात्रिकं ऐर्यापथिकं च बोद्धव्यं।
पाक्षिकं चातुर्मासिकं सांवत्सरमुत्तमार्थम् ॥ ११६ ॥

प्रतिक्रमणं कृतकारितानुमतातिचारान्निवर्तनं, दिवसे भवं दैवसिकं दिवसमध्ये नामस्थापनाद्रव्यक्षेत्रकालभावाश्रितातीचारस्य कृतकारितानुमतस्य मनोवचनकायैः शोधनं, तथा रात्रौ भवं रात्रिकं रात्रिविषयस्य षड्विधातीचारस्य कृतकारितानुमतस्य त्रिविधेन निरसनं रात्रिकं, ईर्यापथे भवमैर्यापथिकं षड्जीवनिकायविषयातीचारस्य निरसनं ज्ञातव्यं, पक्षे भवं पाक्षिकं पंचदशाहोरात्रविषयस्य षड्विधनामादिकारणस्य कृतकारितानुमतस्य मनोवचनकायैः परिशोधनं, चतुर्मासेषु भवं चातुर्मासिकं, संवत्सरे भवं सांवत्सरिकं चतुर्मासमध्ये संवत्सरमध्ये नामादिभेदेन षड्विधस्यातीचारस्य बहुभेदभिन्नस्य वा, कृतकारितानुमतस्य मनोवचनकायैः निरसनं, उत्तमार्थे भवमौत्तमार्थं यावज्जीवं चतुर्विधाहारस्य प-

रित्यागः सर्वातिचारप्रतिक्रमणस्यात्रान्तर्भावो द्रष्टव्यः, एवं प्रतिक्रमणसप्तकं द्रष्टव्यम् ॥ ११६ ॥

पुनरप्यन्येन प्रकारेण भेदं प्रतिपादयन्नाह—

**पडिकमओ पडिकमणं**
**पडिकमिदव्वं च होदि णादव्वं ।**
**एदेसिं पत्तेयं परूवणा होदि तिण्हंपि ॥ ११७ ॥**

प्रतिक्रामकः प्रतिक्रमणं
प्रतिक्रमितव्यं च भवति ज्ञातव्यं ।
एतेषां प्रत्येकं प्ररूपणा भवति त्रयाणामपि ॥११७॥

प्रतिक्रामति कृतदोषाद्विरमतीति प्रतिक्रामकः, अथवा दोषनिर्हरणे प्रवर्त्तते अविघ्नेन प्रतिक्रमत इति प्रतिक्रामकः, पंचमहाव्रतादिश्रवणधारणदोषनिर्हरणतत्परः प्रतिक्रमणं पंचमहाव्रताद्यतीचारविरतिर्व्रतशुद्धिनिमित्ताक्षरमाला वा, प्रतिक्रमितव्यं द्रव्यं च परित्याज्यं मिथ्यात्वाद्यतीचाररूपं भवति ज्ञातव्यं, एतेषां त्रयाणां प्रत्येकमेकमेकं प्रति प्ररूपणाप्रतिपादनं भवति ॥ ११७ ॥

तथैव प्रतिपादयन्नाह—

**जीवो दु पडिकमओ दव्वे खेत्ते य काल भावे य ।**
**पडिगच्छदि जेण जह्मि तं तस्स भवे पडिकमणं॥**

जीवस्तु प्रतिक्रामकः द्रव्ये क्षेत्रे च काले भावे च ।
प्रतिगच्छति येन यस्मिन् तत्तस्य भवेत् प्रतिक्रमणं

जीवस्तु प्रतिक्रामकः दोषद्वारागतकर्मविक्षपणशीलो जीवश्चेतनालक्षणः क प्रतिक्रामकः द्रव्यक्षेत्रकालभावविषये, द्रव्यमाहारपुस्तकभेषजोपकरणादिकं, क्षेत्रं शयनासनस्थानचंक्रमणादिविषयो भूभागोऽङ्गुलवितस्तिहस्तक्रोशयोजनादिप्रमितः, कालः घटिकामुहूर्तसमयलवदिवसरात्रिपक्षमासर्त्वयनसंवत्सरसंध्यापर्वादिः, भावः परिणामरागद्वेषादिमदादिलक्षणः, एतद्विषयादतिचारान्निवर्त्तनपरो जीवः प्रतिक्रामक इत्युच्यते ज्ञेयाकारवहिर्व्यावृत्तरूपः, अथवा द्रव्यक्षेत्रकालभावविषयादतिचारात्प्रतिगच्छति निवर्त्तते स प्रतिकामकोऽथवा येन परिणामेनाक्षरकदंबकेन वा प्रतिगच्छति पुनर्याति यस्मिन् व्रतशुद्धिपूर्वकस्वरूपे यस्मिन् वा जीवे पूर्वव्रतशुद्धिपरिणतेऽतीचारं परिभूतं स परिणामोऽक्षरसमूहो वा तस्य व्रतस्य तस्य वा व्रतशुद्धिपरिणतस्य जीवस्य भवेत्प्रतिक्रमणं व्रतविषयमतीचारं येन परिणामेन प्रक्षाल्य प्रतिगच्छति पूर्वव्रतशुद्धौ स परिणामस्तस्य जीवस्य भवेत्प्रतिक्रमणमिति । मिथ्यादुष्कृताभिधानादभिव्यक्तप्रतिक्रियं द्रव्यक्षेत्रकालभावमाश्रित्य प्रतिक्रमणमिति वा ॥ ११८ ॥

प्रतिक्रमितव्यं तस्य स्वरूपमाह—

पडिकमिदव्वं दव्वं

सच्चित्ताचित्तमिस्सियं तिविहं ।
खेत्तं च गिहादीयं
कालो दिवसादिकालह्मि ॥११९॥

प्रतिक्रमितव्यं द्रव्यं सचित्ताचित्तमिश्रकं त्रिविधं ।
क्षेत्रं च गृहादिकं कालः दिवसादिकाले ॥ ११९ ॥

प्रतिक्रमितव्यं परित्यजनीयं किं तत् द्रव्यं सचित्ताचित्तमिश्रभेदेन त्रिविधं सह चित्तेन वर्त्तत इति सचित्तं द्विपदचतुष्पदाद्यचित्तं सुवर्णरूप्यलोहादिमिश्रं वस्त्रादियुक्तद्विपदादि तथा क्षेत्रं गृहपत्तनकूपवाप्यादिकं प्रतिक्रमितव्यं तथा कालो दिवसमुहूर्तरात्रिवर्षाकालादिः प्रतिक्रमितव्यः येन द्रव्येण क्षेत्रेण कालेन वा पापागमो भवति तत् द्रव्यं क्षेत्रं स कालः परिहरणीयः द्रव्यक्षेत्रकालाश्रितदोषाभाव इत्यर्थः । काले च प्रतिक्रमितव्यं यस्मिन् काले च प्रतिक्रमणमुक्तं तस्मिन् काले कर्त्तव्यमिति, अथ वा कालेऽष्टमीचतुर्दशीनंदीश्वरादिके द्रव्यं क्षेत्रं प्रतिक्रमितव्यं कालश्च दिवसादिः प्रतिक्रमितव्य उपवासादिरूपेण, अथवा 'भावो हि' पाठान्तरं भावश्च प्रतिक्रमितव्य इति । अप्रासुकद्रव्यक्षेत्रकालभावास्त्याज्याः स्नदुदारंस्त्यादीचाराश्च परिहरणीया इति ॥ ११९ ॥

भावप्रतिक्रमणमाह—

मिच्छत्तपडिकमणं तह चेव असंजमे पडिकमणं ।

जीवस्तु प्रतिक्रामकः द्रव्ये क्षेत्रे च काले भावे च ।
प्रतिगच्छति येन यस्मिन् तत्तस्य भवेत् प्रतिक्रमणं

जीवस्तु प्रतिक्रामकः दोषद्वारागतकर्मविक्षपणशीलो जीवश्चेतनालक्षणः क प्रतिक्रामकः द्रव्यक्षेत्रकालभावविषये, द्रव्यमाहारपुस्तकभेषजोपकरणादिकं, क्षेत्र शयनासनस्थानचंक्रमणादिविषयो भूभागोऽङ्गुलवितस्तिहस्तक्रोशयोजनादिप्रमितः, कालः घटिकामुहूर्तसमयलवदिवसरात्रिपक्षमासत्वयनसंवत्सरसंध्यापर्वादिः, भावः परिणामरागद्वेषादिमदादिलक्षणः, एतद्विषयादतिचारान्निवर्त्तनपरो जीवः प्रतिक्रामक इत्युच्यते ज्ञेयाकारवहिर्व्यावृत्तरूपः, अथवा द्रव्यक्षेत्रकालभावविषयादतिचारात्प्रतिगच्छति निवर्त्तते स प्रतिक्रामकोऽथवा येन परिणामेनाक्षरकदंबकेन वा प्रतिगच्छति पुनर्याति यस्मिन् व्रतशुद्धिपूर्वकस्वरूपे यस्मिन् वा जीवे पूर्वव्रतशुद्धिपरिणतेऽतीचारं परिभूतं स परिणामोऽक्षरसमूहो वा तस्य व्रतस्य तस्य वा व्रतशुद्धिपरिणतस्य जीवस्य भवेत्प्रतिक्रमणं व्रतविषयमतीचारं येन परिणामेन प्रक्षाल्य प्रतिगच्छति पूर्वव्रतशुद्धौ स परिणामस्तस्य जीवस्य भवेत्प्रतिक्रमणमिति । मिथ्यादुष्कृताभिधानादभिव्यक्तप्रतिक्रियं द्रव्यक्षेत्रकालभावमाश्रित्य प्रतिक्रमणमिति वा ॥ ११८ ॥

प्रतिक्रमितव्यं तस्य स्वरूपमाह—

पडिकमिदव्वं दव्वं

सच्चित्ताचित्तमिस्सियं तिविहं ।
खेत्तं च गिहादीयं
कालो दिवसादिकालह्मि ॥११९॥

प्रतिक्रमितव्यं द्रव्यं सचित्ताचित्तमिश्रकं त्रिविधं ।
क्षेत्रं च गृहादिकं कालः दिवसादिकाले ॥ ११९ ॥

प्रतिक्रमितव्यं परित्यजनीयं किं तत् द्रव्यं सचित्ताचित्तमिश्रभेदेन त्रिविधं सह चित्तेन वर्त्तत इति सचित्तं द्विपद्चतुष्पदाद्यचित्तं सुवर्णरूप्यलोहादि मिश्रं वस्त्रादियुक्तद्विपदादि तथा क्षेत्रं गृहपत्तनकूपवाप्यादिकं प्रतिक्रमितव्यं तथा कालो दिवसमुहूर्तरात्रिवर्षाकालादिः प्रतिक्रमितव्यः येन द्रव्येण क्षेत्रेण कालेन वा पापागमो भवति तत् द्रव्यं क्षेत्रं स कालः परिहरणीयः द्रव्यक्षेत्रकालाश्रितदोषाभाव इत्यर्थः । काले च प्रतिक्रमितव्यं यस्मिन् काले च प्रतिक्रमणमुक्तं तस्मिन् काले कर्त्तव्यमिति, अथ वा कालेऽष्टमीचतुर्दशीनंदीश्वरादिके द्रव्यं क्षेत्रं प्रतिक्रमितव्यं कालश्च दिवसादिः प्रतिक्रमितव्य उपवासादिरूपेण, अथवा 'भावो हि' पाठान्तरं भावश्च प्रतिक्रमितव्य इति । अप्रासुकद्रव्यक्षेत्रकालभावास्त्याज्याः स्तद्द्वारेणातीचाराश्च परिहरणीया इति ॥ ११९ ॥

भावप्रतिक्रमणमाह—

मिच्छत्तपडिकमणं तह चेव असंजमे पडिकमणं ।

कसाएसु पडिकमणं जोगेसु य अप्पसत्थेसु १२०

मिथ्यात्वप्रतिक्रमणं तथा चैव असंयमे प्रतिक्रमणं ।
कषायेषु प्रतिक्रमणं योगेषु च अप्रशस्तेषु ॥ १२० ॥

मिथ्यात्वस्य प्रतिक्रमणं त्यागस्तद्विषयदोषनिर्हरणं तथैवासंयमस्य प्रतिक्रमणं तद्विषयातीचारपरिहारः कषायाणां क्रोधादीनां प्रतिक्रमणं तद्विषयातीचारशुद्धिकरणं योगानामप्रशस्तानां प्रतिक्रमणं मनोवाक्कायविषयव्रतातीचारनिवर्तनमित्येवं भावप्रतिक्रमणमिति ॥ १२० ॥

आलोचनापूर्वकं प्रतिक्रमणं यतोऽत आलोचनास्वरूपमाह-

काऊण य किदियम्मं
पडिलेहिय अंजलीकरणसुद्धो ।
आलोचिज्ज सुविहिदो
गारव माणं च मोत्तूण ॥ १२१ ॥

कृत्वा च कृतिकर्म प्रतिलेख्य अंजलीकरणशुद्धः ।
आलोचयेत् सुविहितः गौरवं मानं च मुक्त्वा ॥ १२१

कृतिकर्म विनय सिद्धभक्तिश्रुतभक्त्यादिकं कृत्वा पूर्वापरभागं स्वोपवेशनस्थानं च प्रतिलेख्य सम्मार्ज्य पिच्छिकया चक्षुषा चाथवा चारित्रातीचारान सम्यङ्निरूप्यांजलिकरणं शुद्धिर्ललाटपट्टविन्यस्तकरकुड्मलक्रियाशुद्ध एवमा-

लोचयेत् गुरवेऽपराधान्निवेदयेत् सुविहितः स्वच्छवृत्तिः ऋद्धिगौरवं रसगौरवं मानं च जात्यादिमदं मुक्त्वा परित्यज्यैवं गुरवे स्वव्रतातीचारान्निवेदयेदिति ॥ १२१ ॥

आलोचनाप्रकारमाह—

**आलोचणं दिवसियं रादिअ इरियापधं च बोद्धव्वं**
**पक्खिय चादुम्मासिय संवच्छरमुत्तमट्ठं च १२२**

आलोचनं दैवसिकं रात्रिकं ईर्यापथं च बोधव्यं ।
पाक्षिकं चातुर्मासिकं सांवत्सरिकमुत्तमार्थं च ॥ १२२

आलोचनं गुरवेऽपराधनिवेदनं अर्हद्भट्टारकस्याग्रतः स्वापराधाविष्करणं वा स्वचित्तेऽपराधानामनवगूहनं, दिवसे भवं दैवसिकं रात्रौ भवं रात्रिकं ईर्यापथे भवमैर्यापथिकं बोद्धव्यं पक्षे भवं पाक्षिकं चतुर्षु मासेषु भवं चातुर्मासिकं संवत्सरे भवं सांवत्सरिकं उत्तमार्थे भवमौत्तमार्थं च दिवसरात्रीर्यापथपक्षचतुर्माससंवत्सरोत्तमार्थविषयजातापराधानां गुर्वादिभ्यो निवेदनं सप्तप्रकारमालोचनं वेदितव्यमिति ॥ १२२ ॥

आलोचनीयमाह—

**अणाभोगकिदं कम्मं जं किंवि मणसा कदं ।**
**तं सव्वं आलोचेज्जहु अव्वाखित्तेण चेदसा १२३**

अनाभोगकृतं कर्म यत् किमपि मनसा कृतं ।

तद् सर्वं आलोचयेत् अव्याक्षिप्तेन चेतसा ॥ १२३

आभोगः सर्वजनपरिज्ञातव्रतातीचारोऽनाभोगो न परिज्ञातस्तस्मादनाभोगकृतं कर्माऽऽभोगमन्तरेण कृतातीचारस्तथाभोगकृतश्चातीचारश्च तथा यत्किंचिन्मनसा च कृतं कर्म तथा कायवचनकृतं च तत्सर्वमालोचयेत् यत्किंचिदनाभोगकृतं कर्माभोगकृतं कायवाङ्मनोभिः कृतं च पापं तत्सर्वमव्याक्षिप्तचेतसाऽनाकुलितचेतसाऽऽलोचयेदिति ॥ १२३ ॥

आलोचनापर्यायनामान्याह ——

आलोचणमालुंचण विगडीकरणं च भावसुद्धी दु
आलोचिदह्मि आराधणा अणालोचणे भज्जा ॥
आलोचनमालुंचनं विकृतिकरणं च भावशुद्धिस्तु ।
आलोचिते आराधना अनालोचने भाज्या ॥ १२४॥

आलोचनमालुंचनमपनयनं विकृतीकरणमाविष्करणं भावशुद्धिश्चेत्येकोऽर्थः । अथ किमर्थमालोचनं क्रियत इत्याशंकायामाह,— यस्मादालोचिते चरित्राचारपूर्वके गुरवे निवेदिते चेति आराधना सम्यग्दर्शनज्ञानचारित्रशुद्धिरनालोचने पुनर्दोषाणामनाविष्करणे पुनर्भाज्याऽऽराधना तस्मादालोचयितव्यमिति ॥ १२४ ॥

आलोचने कालहरणं न कर्तव्यमिति प्रदर्शयन्नाह,—

**उप्पण्णो उप्पण्णा माया अणुपुव्वसो णिहंतव्वा ।**
**आलोचणणिंदणगरहणाहिं ण पुणो तिअं विदिअं**

उत्पन्न उत्पन्ना माया अनुपूर्व्वशो निहंतव्या ।
आलोचननिंदनगर्हणे न पुनः तृतीयं द्वितीयं ॥

उत्पन्नोत्पन्ना यथा यथा संजाता माया व्रतातीचारोऽनुपूर्वशोनुक्रमेण यस्मिन् काले यस्मिन् क्षेत्रे यद्द्रव्यमाश्रित्य येन भावेन तेनैव क्रमेण कौटिल्यं परित्यज्य निहन्तव्या परिशोध्या यस्मादालोचने गुरवे दोषनिवेदने निंदने परेभ्याविष्करणे गर्हणे आत्मजुगुप्सने कर्त्तव्ये पुनर्द्वितीयं पुनर्न करिष्यामीत्यथ वा न पुनस्तृतीयं दिनं द्वितीयं वा द्वितीयदिवसे तृतीयदिवसे आलोचयिष्यामीति न चिंतनीयं यस्माद्गतमपि कालं न जानंतीति भावार्थस्तस्माच्छीघ्रमालोचयितव्यमिति ॥

यस्मात्—

**आलोचणणिंदणगर-**
**हणाहिं अब्भुट्टिओ अ करणाए ।**
**तं भावपडिक्कमणं**
**सेसं पुण दव्वदो भणिअं ॥ १२६ ॥**

आलोचननिंदनगर्हणैः अभ्युत्थितश्च करणे ।
तत् भावप्रतिक्रमणं शेषं पुनः द्रव्यतो भणितं ॥

गुरवेऽपराधनिवेदनमालोचनं वचनेनात्मजुगुप्सनं परेभ्यो निवेदनं च निन्दा चित्तेनात्मनो जुगुप्सनं शासनविराधनभयं च गर्हणमेतैः क्रियायां प्रतिक्रमणोऽथ वा पुनरतीचाराकरणेऽभ्युत्थित उद्यतो यतस्तस्माद्भावप्रतिक्रमणं परमार्थभूतो दोषपरिहारः शेषं पुनरेवमन्तरेण द्रव्यतोऽपरमार्थरूपं भणितमिति ॥ १२६ ॥

द्रव्यप्रतिक्रमणे दोषमाह—

**भावेण अणुवजुत्तो दव्वीभूदो पडिक्कमदि जो दु।**
**जस्सट्ठं पडिकमदे तं पुण अट्ठं ण साधेदि १२७**

भावेन अनुपयुक्तः द्रव्यीभूतः प्रतिक्रमते यस्तु ।
यस्यार्थं प्रतिक्रमते तं पुनः अर्थं न साधयति ॥

भावेनानुपयुक्तः शुद्धपरिणामरहितः द्रव्यीभूतो दोषेभ्यो न निर्गतमना रागद्वेषाद्युपहतचेताः प्रतिक्रमते दोषनिर्हरणाय प्रतिक्रमणं शृणोति करोति चेति यः स यस्यार्थं यस्मै दोषाय प्रतिक्रमते तं पुनरर्थं न साधयति तं दोषं न परित्यजतीत्यर्थः ॥ १२७ ॥

भावप्रतिक्रमणमाह—

**भावेण संपजुत्तो जदत्थजोगो य जंपदे सुत्तं ।**
**सो कम्मणिज्जराए विउलाए वट्टदे साधू ॥१२८॥**

भावेन संप्रयुक्तः यदर्थयोगश्च जल्पति सूत्रं ।
स कर्मनिर्जरायां विपुलायां वर्तते साधुः ॥ १२८॥

भावेन संप्रयुक्तो यदर्थं योगश्च यस्मिन्निमित्तं शुभानुष्ठानं यस्मा अर्थायाभ्युद्यतो जल्पति सूत्रं प्रतिक्रमणपदान्युच्चरति शृणोति वा स साधुः कर्मनिर्जरायां विपुलायां प्रवर्त्तते सर्वापराधान् परिहरतीत्यर्थः ॥ १२८ ॥

किमर्थं प्रतिक्रमणे तात्पर्यं, यस्मात्—

सपाडिक्कमणो धम्मो
पुरिमस्स य पच्छिमस्स य जिणस्स।
अवराहे पडिकमणं
मज्झिमयाणं जिणवराणं॥१२९॥

सप्रतिक्रमणो धर्मः पूर्वस्य च पश्चिमस्य च जिनस्य
अपराधे प्रतिक्रमणं मध्यमानां जिनवराणां ॥ १२९॥

सह प्रतिक्रमणेन वर्त्तत इति सप्रतिक्रमणो धर्मो दोषपरिहारेण चारित्रं पूर्वस्य प्राक्तनस्य वृषभतीर्थंकरस्य पश्चिमस्य पाश्चात्यस्य सन्मतिस्वामिनो जिनस्य तयोस्तीर्थंकरयोर्धर्मः प्रतिक्रमणसमन्वितः अपराधो भवतु मा वा, मध्यमानां पुनर्जिनवराणामजितादिपार्श्वनाथपर्यन्तानामपराधे सति प्रतिक्रमणं तेषां यतोऽपराधबाहुल्याभावादिति ॥ १२९ ॥

जावेदु अप्पणो वा अण्णदरे वा भवे अदीचारो।
तावेदु पडिक्कमणं मज्झिमयाणं जिणवराणं १३०

यस्मिन् आत्मनो वा अन्यतरस्य वा भवेदतीचारः।
तस्मिन् प्रतिक्रमणं मध्यमानां जिनवराणां ॥१३०॥

यस्मिन् व्रत आत्मनोऽन्यस्य वा भवेदतीचारस्तस्मिन् विषये भवेत्प्रतिक्रमणं मध्यमजिनवराणामाद्यपश्चिमयोः पुनस्तीर्थकरयोरेकस्मिन्नपराधे सर्वान् प्रतिक्रमणदंडकान् भणति ॥

इत्याह—

इरियागोयरसुमिणा—
दिसव्वमाचरदु मा व आचरदु।
पुरिम चरिमादु सव्वे
सव्वं णियमा पडिकमंदि ॥१३१॥

ईर्यागोचरस्वप्नादिसर्वं आचरतु मा वा आचरतु।
पूर्वे चरमे तु सर्वे सर्वान् नियमान् प्रतिक्रमंते ॥१३१

ईर्यागोचरस्वप्नादिभवं सर्वमतीचारमाचरतु मा वाऽऽचरतु पूर्वे ऋषभनाथशिष्याश्चरमा वर्द्धमानशिष्याः सर्वे सर्वान्नियमान् प्रतिक्रमणदण्डकान् प्रतिक्रमन्त उच्चारयन्ति १३१

किमित्याद्याः पश्चिमाश्च सर्वान्नियमानुच्चारयंति किमि-

त्यजितादिपार्श्वनाथपर्यन्तशिष्या नोच्चारयन्ति इत्याशंकायामाह-

मज्झिमया दिढबुद्धी
एयग्गमणा अमोहलक्खा य ।
तह्मा हु जमाचरंति
तं गरहंता वि सुज्झंति ॥ १३२ ॥

मध्यमा दृढबुद्धय एकाग्रमनसः अमोहलक्षाश्च ।
तस्मात् हि यमाचरंति तं गर्हंतोपि शुध्यंति ॥ १३२॥

यस्मान्मध्यमतीर्थकरशिष्या दृढबुद्धयोऽविस्मरणशीला एकाग्रमनसः स्थिरचित्ता अमोहलक्षा अमूढमनसः प्रेक्षापूर्वकारिणः तस्मात्स्फुटं यं दोषं आचरंति तस्माद्दोषाद् गर्हन्तोऽप्यात्मानं जुगुप्समानाः शुद्धयन्ते शुद्धचारित्रा भवन्तीति १३२

पुरिमचरिमादु जह्मा
चलचित्ता चेव मोहलक्खा य ।
तो सव्वपडिकमणं
अंधलयघोडय दिट्ठंता ॥ १३३ ॥

पूर्वचरमास्तु यस्मात् चलचित्ताश्चैव मोहलक्षाश्च ।
तस्मात् सर्वप्रतिक्रमण अंधलकघोटकः दृष्टांतः॥ १३३

पूर्वचरमतीर्थकरशिष्यास्तु यस्माच्चलचित्ताश्चैव दृढ-

नसो नैव, मोहलक्षाश्च मूढमनसो बहून् वारान् प्रतिपादितमपि शास्त्रं न जानंति ऋजुजडा वक्रजडाश्च यस्मात्तस्मात्सर्वप्रतिक्रमणं दंडकोच्चारणं । तेषामन्धलकघोटकदृष्टान्तः कस्यचिद्राज्ञोऽश्वोऽन्धस्तेन च वैद्यपुत्रं प्रति अश्वायौषधं पृष्टं स च वैद्यकं न जानाति वैद्यश्च ग्रामं गतस्तेन च वैद्यपुत्रेणाश्वाक्षिनिमित्तानि सर्वाण्यौषधानि प्रयुक्तानि तैः सोऽश्वः स्वस्थीभूतः एवं साधुरपि यदि एकस्मिन्प्रतिक्रमणदण्डके स्थिरमना न भवति अन्यस्मिन् भविष्यति अन्यस्मिन् वा न भवत्यन्यस्मिन् भवष्यतीति सर्वदण्डकोच्चारणं न्याय्यमिति, न चात्र विरोधः, सर्वेपि कर्मक्षयकरणसमर्था यतः इति ॥ १३३ ॥

प्रतिक्रमणनिर्युक्तिमुपसंहरन् प्रत्याख्याननिर्युक्तिं प्रपंचयन्नाह—

पडिकमणणिजुत्ती पुण
एसा कहिया मए समासेण ।
पच्चक्खाणणिजुत्ती
एत्तो उड्ढं पवक्खामि ॥ १३४ ॥

प्रतिक्रमणानिर्युक्तिः पुन एषा कथिता मया समासेन ।
प्रत्याख्याननिर्युक्तिं इत ऊर्ध्वं प्रवक्ष्यामि ॥ १३४ ॥

प्रतिक्रमणनिर्युक्तिरेषा कथिता मया समासेन पुनः प्रत्याख्याननिर्युक्तिमित ऊर्ध्वं प्रवक्ष्यामीति ॥ १३४ ॥

तामेव प्रतिज्ञां निर्वहन्नाह—

**णामट्ठवणा दव्वे खेत्ते काले य होदि भावे य।**
**एसो पच्चक्खाणे णिक्खेवो छव्विहो णेओ॥ १३५**

नाम स्थापना द्रव्यं क्षेत्रं कालश्च भवति भावश्च।
एषः प्रत्याख्याने निक्षेपः षड्विधो ज्ञेयः॥ १३५॥

अयोग्यानि नामानि पापहेतूनि विरोधकारणानि न कर्तव्यानि न कारयितव्यानि नानुमंतव्यानीति नामप्रत्याख्यानं प्रत्याख्याननाममात्रं वा, अयोग्याः स्थापनाः पापबंधहेतुभूताः मिथ्यात्वादिप्रवर्त्तका अपरमार्थरूपदेवतादिप्रतिबिंबानि पापकारणद्रव्यरूपाणि च न कर्त्तव्यानि न कारयितव्यानि नानुमन्तव्यानि इति स्थापनाप्रत्याख्यानं प्रत्याख्यानपरिणतप्रतिबिंबं च सद्भावासद्भावरूपं स्थापनाप्रत्याख्यानमिति, पापबन्धकारणद्रव्यं सावद्यं निरवद्यमपि तपोनिमित्तं त्यक्तं न भोक्तव्यं न भोजयितव्यं नानुमंतव्यमिति द्रव्यप्रत्याख्यानं प्राभृतज्ञायकोऽनुपयुक्तस्तच्छरीरं भावी जीवस्तद्व्यतिरिक्तं च द्रव्यप्रत्याख्यानं असंयमादिहेतुभूतस्य क्षेत्रस्य परिहारः क्षेत्रप्रत्याख्यानं प्रत्याख्यानपरिणतेन सेवितप्रदेशो प्रवेशो वा क्षेत्रप्रत्याख्यानं, असंयमादिनिमित्तभूतस्य कालस्य त्रिधा परिहारः कालप्रत्याख्यानं प्रत्याख्यानपरिणतेन सेवितकालो वा, मिथ्यात्वासंयमकषायादीनां त्रिविधेन परिहारो भावप्रत्या-

ख्यानं भावप्रत्याख्यानप्राभृतज्ञायकस्तद्विज्ञानं प्रदेशादित्येवमेष नामस्थापनाद्रव्यक्षेत्रकालभावविषयः प्रत्याख्याने निक्षेपः षड्विधो ज्ञातव्य इति । प्रतिक्रमणप्रत्याख्यानयोः को विशेष इति चेन्नैष दोषोऽतीतकालविषयातीचारशोधनं प्रतिक्रमणमतीतभविष्यद्वर्तमानकालविषयातिचारनिर्हरणं प्रत्याख्यानमथवा व्रताद्यतीचारशोधनं प्रतिक्रमणमतीचारकारणसचित्ताचित्तमिश्रद्रव्यविनिवृत्तिस्तपोनिमित्तं प्रासुकद्रव्यस्य च निवृत्तिः प्रत्याख्यानं यस्मादिति ॥ १३५ ॥

प्रत्याख्यायकप्रत्याख्यानप्रत्याख्यातव्यस्वरूपप्रतिपादनार्थमाह—

**पच्चक्खाओ पच्चक्खाणं पच्चक्खियव्वमेवं तु ।**
**तीदे पच्चुप्पण्णे अणागदे चेव कालह्मि ॥ १३६ ॥**

प्रत्याख्यापकः प्रत्याख्यानं प्रत्याख्यातव्यमेवं तु ।
अतीते प्रत्युत्पन्ने अनागते चैव काले ॥ १३६ ॥

प्रत्याख्यायको जीवः संयमोपेतः प्रत्याख्यानं परित्यागपरिणामः प्रत्याख्यातव्यं द्रव्यं सचित्ताचित्तमिश्रकं सावद्यं निरवद्यं वा एवं त्रिप्रकारं प्रत्याख्यानस्वरूपोऽन्यथाऽनुपपत्तेरिति तत्त्रिविधमप्यतीते काले प्रत्युत्पन्ने कालेऽनागते च काले भूतभविष्यद्वर्तमानकालेष्वपि ज्ञातव्यमिति ॥

प्रत्याख्यायकस्वरूपं प्रतिपादयन्नाह—

**आणाय जाणणाविय उवजुत्तो मूलमज्झणिद्देसे ।**

**सागारमणागारं अणुपालेंतो दढधिदीओ ॥१३७**

**आज्ञया ज्ञापकेनापि च उपयुक्तो मूलमध्यनिर्देशे ।**
**सागारमनागारं अनुपालयन् दृढधृतिकः ॥ १३७ ॥**

आणाविय आज्ञया गुरूपदेशेनार्हदाद्याज्ञया चारित्रश्रद्धया जाणाणाविय ज्ञापकेन गुरुनिवेदनेनाथ वा परमार्थतो ज्ञात्वा दोषस्वरूपं तमोहेतुं बाह्याभ्यन्तरं प्रविश्य ज्ञात्वाऽपि चोपयुक्तः षट्प्रकारसमन्वितः मूले आदौ ग्रहणकाले मध्ये मध्यकाले निर्देशे समाप्तौ सागारं गार्हस्थ्यं संयतासंयतयोग्यमथवा साकार सविकल्प भेदसहितं अनागार संयमसमेतोद्भव यतिप्रतिबद्धमथ वाऽनाकारं निर्विकल्पं सर्वथा परित्यागमनुपालयन् रक्षयन् दृढधृतिकः सद्दृढधैर्यः मूलमध्यनिर्देशे साकारमनाकारं च प्रत्याख्यानमुपयुक्तः सन् आज्ञया सम्यग्विवेकेन वाऽनुपालयन् दृढधृतिको यो भवति स एष प्रत्याख्यायको नामेति संबन्धः उत्तरेणाथवा मूलमध्यनिर्देश आज्ञयोपयुक्तः साकारमनाकारं च प्रत्याख्यान च गुरु ज्ञापयन् प्रतिपादयन् अनुपालयँश्च दृढधृतिकः प्रत्याख्यायको भवेदिति ॥

शेषं प्रतिपादयन्नाह.——

**एसो पच्चक्खाओ पच्चक्खाणेत्ति वुच्चदे चाओ ।**
**पच्चविखदव्वमुवहिं आहारो चेव बोधव्वो ॥ १३८**

एष प्रत्याख्यायकः पूत्याख्यानमिति उच्यते त्यागः।
पूत्याख्यातव्यमुपाधिराहारश्चैव बोद्धव्यः ॥ १३८॥

एष प्रत्याख्यायकः पूर्वेण सम्बन्धः प्रत्याख्यानमित्युच्यते त्यागः सावद्यस्य द्रव्यस्य निरवद्यस्य वा तपोनिमित्त परित्यागः प्रत्याख्यानं प्रत्याख्यातव्यः परित्यजनीय उपाधिः परिग्रहः सचित्ताचित्तमिश्रभेदभिन्नः क्रोधादिभेदभिन्नश्चाहारश्चाभक्ष्यभोज्यादिभेदभिन्नो बोद्धव्य इति ॥ १३८ ॥

प्रस्तुतं प्रत्याख्यान प्रपंचयन्नाह;—

पच्चक्खाणं उत्तरगुणेसु खमणादि होदि णेयविहं।
तेणवि अ एत्थ पयदं तंपि य इणमो दसविहं तु॥
पूत्याख्यानं उत्तरगुणेषु क्षमणादि भवति अनेकाविधं।
तेनापि च अत्र प्रयत तदपि च इदं दशविधं तु॥ १३९

प्रत्याख्यान मूलगुणविषयमुत्तरगुणविषयं वक्ष्यमाणादिभेदेनाशनपरित्यागादिभेदेनानेकविधमनेकप्रकार तेनापि चात्र प्रकृतं प्रस्तुतं अथ वा तेन प्रत्याख्यायकेनात्र यत्नः कर्त्तव्यस्तदेतदपि च दशविधं तदपि चैतत् क्षमणादि दशप्रकारं भवतीति वेदितव्यम् ॥ १३९ ॥

तान् दशभेदान् प्रतिपादयन्नाह;—

अणागदमदिकंतं कोडीसहिदं णिखंडिदं चेव।

## सागारमणागारं परिमाणगदं अपरिसेसं ॥

अनागतमतिक्रांतं कोटीसहितं निखंडितं चैव ।
साकारमनाकारं परिमाणगतं अपरिशेषं ॥ १४० ॥

अणागद अनागतं भविष्यत्कालविषयोपवासादिकरण चतुर्दश्यादिषु यत्कर्त्तव्यं तत्त्रयोदश्यादिषु यत् क्रियते तदनागत प्रत्याख्यानं, अदिकंतं अतिक्रान्तं अतीनकालविषयोप वासादिकरणं चतुर्दश्यादिषु यत्कर्त्तव्यमुपवासादिकं तत्प्रति पदादिषु क्रियतेऽतिक्रान्तं प्रत्याख्यानं कोडीसहिदं कोटिसहित संकल्पसमन्वित शक्त्यपेक्षयोपवासादिक श्वस्तने दिने स्वाध्यायवेलायामतिक्रान्तायां यदि शक्तिर्भविष्यत्युपवासादिकं करिष्यामि नो चेन्न करिष्यामीत्येव यत् क्रियते प्रत्याख्यानं तत्कोटिसहितमिति, णिक्खडिदं निखंडितं अवश्यकर्त्तव्य पाक्षिकादिषूपवासकरणं निखडितं प्रत्याख्यानं, साकारं सभेदं सर्वतोभद्रकनकावल्याद्युपवासविधिर्नक्षत्रादिभेदेन करणं तत्साकारप्रत्याख्यानं, अनाकार स्वेच्छयोपवासविधिर्नक्षत्रादिकमंतरेणोपवासादिकरणमनाकारप्रत्याख्यानं, परिमाणगतं प्रमाणसहितं षष्ठाष्टमदशमद्वादशपक्षार्द्धपक्षमासादिकालादिपरिमाणेनोपवासादिकरणं परिमाणगतं प्रत्याख्यानं, अपरिशेषं यावज्जीवं चतुर्विधाऽऽहारादिपरित्यागोऽपरिशेषं प्रत्याख्यानम् ॥ १४० ॥

तथा;—

**अद्धाणगदं णवमं दसमं तु सहेदुगं वियाणाहि ।**
**पच्चक्खाणवियप्पा णिरुत्तिजुत्ता जिणमदह्मि ॥**

अध्वानगत नवमं दशमं तु सहेतुकं विजानीहि ।
प्रत्याख्यानविकल्पा निरुक्तियुक्ता जिनमते ॥१४१॥

अद्धाणगदं अध्वानं गतमध्वगतं मार्गविषयाटवीनद्यादिनिष्क्रमणद्वारेणोपवासादिकरणं अध्वगतं नाम प्रत्याख्यानं नवमं, सह हेतुना वर्त्तत इति सहेतुकमुपसर्गादिनिमित्तापेक्षमुपवासादिकरणं सहेतुकं नाम प्रत्याख्यानं दशमं विजानीहि, एवमेतान्प्रत्याख्यानकरणविकल्पान्विभक्तियुक्तान्तयानुगतान् परमार्थरूपाञ्जिनमते विजानीहीति ॥ १४१ ॥

पुनरपि प्रत्याख्यानकरणविधिमाह;—

**विणए तहाणुभासा**
**हवदि य अणुपालणाय परिणामे ।**
**एदं पच्चक्खाणं**
**चदुव्विधं होदि णादव्वं ॥ १४२ ॥**

विनयेन तथानुभाषया
भवति च अनुपालनेन परिणामेन ।
एतत् प्रत्याख्यानं चतुर्विधं

भवति ज्ञातव्यं ॥ १४२ ॥

विनयेन शुद्धं तथाऽनुभाषयाऽनुपालनेन परिणामेन च यच्छुद्धं भवति तदेतत्प्रत्याख्यानं चतुर्विधं भवति ज्ञातव्यं यस्मिन् प्रत्याख्याने विनयेन सार्द्धमनुभाषाप्रतिपालनेन सह परिणामशुद्धिस्तत्प्रत्याख्यानं चतुर्विधं भवति ज्ञातव्यमिति १४२

विनयप्रत्याख्यानं तावदाह:—

किदियम्मं उवचारिय
विणओ तह णाणदंसणचरित्ते ।
पंचविधविणयजुत्तं
विणयसुद्धं हवदि तं तु ॥ १४३॥

कृतिकर्म औपचारिकः विनयः तथा ज्ञानदर्शनचारित्रे।
पंचविधविनययुक्तं विनयशुद्धं भवति तत्तु ॥ १४३ ॥

कृतिकर्म सिद्धभक्तियोगभक्तिगुरुभक्तिपूर्वकं कायोत्सर्गकरणं, पूर्वोक्तः औपचारिकविनयः कृतकरमुकुलललाटपट्टविनतोत्तमांगः प्रशांततनुः पिच्छिकया विभूपितवक्ष इत्याद्युपचारविनयः, तथा ज्ञानदर्शनचारित्रविषयो विनयः, एवं क्रियाकर्मादिपंचप्रकारेण विनयेन युक्तं विनयशुद्धं तत्प्रत्याख्यानं भवत्येवेति ॥ १४३ ॥

अनुभाषायुक्तं प्रत्याख्यानमाह,—

अणुभासदि गुरुवयणं
अक्खरपदवंजणं कमविसुद्धं ॥
घोसविसुद्धी सुद्धं
एदं अणुभासणासुद्धं ॥ १४४ ॥

अनुभाषते गुरुवचनं अक्षरपदव्यंजनं क्रमविशुद्धं ।
घोषविशुद्ध्या शुद्धमेतत् अनुभाषणाशुद्धं ॥ १४४॥

अणुभासदि अनुभाषते अनुवदति गुरुवचनं गुरुणा यथोच्चारिता प्रत्याख्यानाक्षरपद्धतिस्तथैव तामुच्चरतीति, अक्षरमेकस्वरयुक्तं व्यंजनं, इच्छामीत्यादिकं पदं सुबन्तं मिडंतं चाक्षरसमुदाय रूपं, व्यंजनमनक्षरवर्णरूपं खंडाक्षरानुस्वारविसर्जनीयादिकं. क्रमविशुद्धं येनैव क्रमेण स्थितानि वर्णपदव्यंजनवाक्यादीनि ग्रंथार्थोभयशुद्धानि तेनैव पाठः, घोषविशुद्ध्या च शुद्धं गुर्वादिव वर्णविषयोच्चारणसहितं मुख्यमध्योच्चारणरहितं महाकलकलेन विहीनं स्वरविशुद्धमिति, एवमेतत्प्रत्याख्यानमनुभाषणशुद्धं वेदितव्यमिति ॥ १४४ ॥

अनुपालनसहितप्रत्याख्यानस्य स्वरूपमाह;—

आदंके उवसग्गे समे य दुब्भिक्खवुत्ति कंतारे ।
जं पालिदं ण भग्गं एदं अणुपालणासुद्धं ॥
आंतके उपसर्गे श्रमे च दुर्भिक्षवृत्तौ कांतारे ।

यत् पालितं न भग्नं एतत् अनुपालनाशुद्धं ॥ १४५ ॥

आतंकः सहसोत्थितो व्याधिः, उपसर्गो देवमनुष्यतिर्यक्कृतपीडा, श्रम उपवासालाभमार्गादिकृतः परिश्रमः ज्वररोगादिकृतश्च, दुर्भिक्षवृष्टिवर्षाकालराज्यभंगविड्वरचौराद्युपद्रवभयेन शस्याद्यभावेन भिक्षायाः प्राप्त्यभावः, कन्तारे महाटवीविंध्यारण्यादिकभयानकप्रदेशः, एतेषूपस्थितेष्वातंकोपसर्गदुर्भिक्षवृत्तिकान्तारेषु यत्प्रतिपालितं रक्षितं न भग्नं न मनागपि विपरिणामरूपं जातं तदेतत्प्रत्याख्यानमनुपालनविशुद्धं नाम ॥ १४५ ॥

परिणामविशुद्धप्रत्याख्यानस्य स्वरूपमाह—

रागेण व दोसेण व मणपरिणामेण दूसिदं जं तु ।
तं पुण पच्चक्खाणं भावविसुद्धं तु णादव्वं ॥
रागेण वा द्वेषेण वा मनःपरिणामेण न दूषितं यत्तु ।
तत् पुनः प्रत्याख्यानं भावविशुद्धं तु ज्ञातव्यम् ॥

रागपरिणामेन द्वेषपरिणामेन च न दूषितं न प्रतिहतं विपरिणामेन यत्प्रत्याख्यानं तत्पुनः प्रत्याख्यानं भावविशुद्धं तु ज्ञातव्यमिति । सम्यग्दर्शनादियुक्तस्य निःकांक्षस्य वीतरागस्य समभावयुक्तस्याहिंसादिव्रतसहितशुद्धभावस्य प्रत्याख्यानं परिणामशुद्धं भवेदिति ॥ १४६ ॥

चतुर्विधाहारस्वरूपमाह;—

**असणं खुहप्पसमणं पाणाणमणुग्गहं तहा पाणं।**
**खादंति खादियं पुण सादंति सादियं भणियं॥**

अशनं क्षुधाप्रशमनं प्राणानामनुग्रहं तथा पानं।
खाद्यते खाद्यं पुनः स्वाद्यते स्वाद्यं भणितं॥ १४७॥

अशन क्षुदुपशमनं बुभुक्षोपरतिः प्राणाना दशप्रकाराणामनुग्रहो येन तत्तथा खाद्यत इति खाद्यं रसविशुद्धं लड्डुकादि पुनरास्वाद्यत इति आस्वाद्यमेलाकक्कोलादिकमिति भणितमेवंविधस्य चतुर्विधाहारस्य प्रत्याख्यानमुत्तमार्थप्रत्याख्यानमिति॥ १४७॥

चतुर्विधस्याहारस्य भेद प्रतिपाद्याभेदार्थमाह—

**सव्वोपि य आहारो असणं सव्वोवि वुच्चदे पाणं**
**सव्वोवि खादियं पुण सव्वोवि य सादियं भणियं**

सर्वोपि च आहारः अशनं सर्वोपि उच्यते पानं।
सर्वोपि खाद्यं पुनः सर्वोपि च स्वाद्यं भणितं॥ १४८

सर्वोऽप्याहारोऽशनं तथा सर्वोऽप्याहारः पानमित्युच्यते तथा सर्वोऽप्याहारः खाद्यं तथा सर्वोऽप्याहारः स्वाद्यमिति भणितं एव चतुर्विधस्याप्याहारस्य द्रव्यार्थिकनयापेक्षयैक्यं आहारत्वेनाभेदादिति॥ १४८॥

पर्यायार्थिकनयापेक्षया पुनश्चतुर्विधत्वमेव प्राह—

असणं पाणं तह खा-
दियं चउत्थं च सादियं भणियं।
एवं परूविदं दु
सद्दहिदुं जे सुही होदि ॥ १४९ ॥

अशनं पानं तथा खाद्यं चतुर्थं च स्वाद्यं भणितं।
एवं प्ररूपितं तु श्रद्धाय सुखी भवति ॥ १४९ ॥

एवमशनपानखाद्यस्वाद्यभेदेनाहार चतुर्विध प्ररूपित श्र द्धाय सुखी भवतीति फलं व्याख्यातं भवतीति ॥ १४९ ॥

प्रत्याख्याननिर्युक्तिं व्याख्याय कायोत्सर्गनिर्युक्तिस्वरूपं प्रतिपादयन्नाह—

पच्चक्खाणणिजुत्ती एसा कहिया मए समासेण।
काओसग्गणिजुत्ती एतो उड्ढं पवक्खामि ॥

प्रत्याख्याननिर्युक्तिः एषा कथिता मया समासेन।
कायोत्सर्गनिर्युक्तिं इत ऊर्ध्वं प्रवक्ष्यामि ॥ १५० ॥

प्रत्याख्याननिर्युक्तिरेषा कथिता मया समासेन कायोत्सर्गनिर्युक्तिमित ऊर्ध्वं प्रवक्ष्य इति। स्पष्टोर्थः ॥१५०॥

णामट्ठवणा दव्वे खेत्ते काले य होदि भावे य।

एसो काउसग्गे णिक्खेवो छव्विहो णेओ॥१५१

नाम स्थापना द्रव्यं क्षेत्रं कालः च भवति भावश्च ।
एषः कायोत्सर्गे निक्षेपः षड्विधो ज्ञेयः ॥ १५१ ॥

खरपरुषादिसावद्यनामकरणद्वारेणागतातीचारशोधनाय कायोत्सर्गो नाममात्रकायोत्सर्गो वा नामकायोत्सर्गः, पापस्थापन द्वारेणागतातीचारशोधननिमित्तकायोत्सर्गपरिणतमतिर्विंवता स्थापनाकायोत्सर्गः, सावद्यद्रव्यसेवाद्वारेणागतातीचारनिर्हरणाय कायोत्सर्गः, कायोत्सर्गव्यावर्णनीयप्राभृतज्ञोऽनुपयुक्तस्तच्छरीरं वा द्रव्यकायोत्सर्गः, सावद्यक्षेत्रसेवनादागतदोषध्वसनाय कायोत्सर्गः कायोत्सर्गपरिणतसेवितक्षेत्रं वा क्षेत्रकायोत्सर्गः, सावद्यकालाचरणद्वारागतदोषपरिहाराय कायोत्सर्गः कायोत्सर्गपरिणतसहितकालो वा कालकायोत्सर्गः, मिथ्यात्वाद्यतीचारशोधनाय भावकायोत्सर्गः कायोत्सर्गव्यावर्णनीयप्राभृतज्ञ उपयुक्तसंज्ञानजीवप्रदेशो वा भावकायोत्सर्गः, एवं नामस्थापनाद्रव्यक्षेत्रकालभावविषय एष कायोत्सर्गनिक्षेपः षड्विधो ज्ञातव्य इति ॥ १५१ ॥

कायोत्सर्गकारणमन्तरेण कायोत्सर्गः प्रतिपादयितुं न शक्यत इति तत्स्वरूपं प्रतिपादयन्नाह,—

काउस्सग्गो काउ-
स्सग्गी काउस्सग्गस्स कारणं चेव ।

एदेसिं पत्तेयं
परूवणा होदि तिण्हंपि ॥ १५२ ॥

कायोत्सर्गः कायोत्सर्गी कायोत्सर्गस्य कारणं चैव ।
एतेषां प्रत्येकं प्ररूपणा भवति त्रयाणामपि ॥ १५२ ॥

कायस्य शरीरस्योत्सर्गः परित्यागः कायोत्सर्गः स्थितस्यासीनस्य सर्वांगचलनरहितस्य शुभध्यानस्य वृत्तिः कायोत्सर्गोऽस्यास्तीति कायोत्सर्गी असंयतसम्यग्दृष्ट्यादिभव्यः कायोत्सर्गस्य कारणं हेतुरेव तेषां त्रयाणामपि प्रत्येकं प्ररूपणा भवति ज्ञातव्येति ॥ १५२ ॥

तावत्कायोत्सर्गस्वरूपमाह;—

वोसरिदबाहुजुगलो चदुरंगुलअंतरेण समपादो ।
सव्वंगचलणरहिओ काउस्सग्गो विसुद्धो दु १५३

व्युत्सृष्टबाहुयुगलश्चतुरंगुलांतरं समपादः ।
सर्वांगचलनरहितः कायोत्सर्गो विशुद्धस्तु ॥ १५३ ॥

व्युत्सृष्टं त्यक्तं बाहुयुगलं यस्मिन्नवस्थाविशेषे सो व्युत्सृष्टबाहुयुगलः प्रलंबितभुजश्चतुरंगुलमन्तरं ययोःपादयोस्तौ-चतुरंगुलान्तरौ चतुरंगुलान्तरौ समौ पादौ यस्मिन्स चतुरंगुलान्तरसमपादः सर्वेषामंगानां करचरणशिरोग्रीवाक्षिभ्रुविकारादीनां चलनं तेन रहितः सर्वांगचलनरहितः सर्वाक्षेप-

विमुक्तः, एवंविधस्तु विशुद्धः कायोत्सर्गो भवतीति ॥१५३॥

कायोत्सर्गस्वरूपनिरूपणायाह;—

**मुक्खट्ठी जिदणिद्दो सुत्तत्थविसारदो करणसुद्धो**
**आदबलविरियजुत्तो काउस्सग्गी विसुद्धप्पा १५४**

मोक्षार्थी जितनिद्रः सूत्रार्थविशारदः करणशुद्धः।
आत्मबलवीर्ययुक्तः कायोत्सर्गी विशुद्धात्मा ॥१५४॥

मोक्षमर्थयत इति मोक्षार्थी कर्मक्षयप्रयोजनः, जिता निद्रा येनासौ जितनिद्रः जागरणशीलः सूत्रञ्चार्थश्च सूत्रार्थौ तयोर्विशारदो निपुणः सूत्रार्थविशारदः, करणेन क्रियाया परिणामेन शुद्धः करणशुद्धः आत्मबलवीर्ययुक्तः आत्माहारशक्तिक्षयोपशमशक्तिसहितः कायोत्सर्गी विशुद्धात्मा भवति ज्ञातव्य इति ॥ १५४ ॥

कायोत्सर्गमधिष्ठातुकामः आह;—

**काउस्सग्गं मोक्खपहदेसयं घादिकम्म अदिचारं**
**इच्छामि अहिट्ठादुं जिणसेविद देसिदत्तादो १५५**

कायोत्सर्गं मोक्षपथदेशकं घातिकर्म आतिचारं।
इच्छामि अधिष्ठातुं जिनसेवितं देशितस्तस्मात्॥ १५५

कायोत्सर्गं मोक्षपथदेशकं सम्यग्दर्शनज्ञानचारित्रोपकारकं घातिकर्मणां ज्ञानदर्शनावरणमोहनीयान्तरायकर्मणामती-

चारं विनाशनं घातिकर्मविध्वंसकमिच्छाम्यहमधिष्ठातुं यतः कायोत्सर्गो जिनैर्देशितः सेवितश्च तस्मात्तमधिष्ठातुमिच्छामीति ॥ १५५ ॥

कायोत्सर्गस्य कारणमाह;—

एगपदमस्सिदस्सवि जो अदिचारो दु रागदोसेहिं
गुत्तीहिं वदिकमो वा चदुहिं कसाएहिं व वदेहिं ॥

एकपदमाश्रितस्यापि यः अतिचारस्तु रागद्वेषाभ्यां।
गुप्तीनां व्यतिक्रमो वा चतुर्भिः कषायैः वा व्रतेषु ॥

एकपदमाश्रितस्यैकपदेन स्थितस्य योऽतीचारो भवति रागद्वेषाभ्यां तथा गुप्तीनां व्यतिक्रमः कषायैश्चतुर्भिः स्यात् व्रतविषये वा यो व्यतिक्रमः स्यात् ॥ १५६ ॥

तथा;—

छज्जीवणिकाएहिं भयमयठाणेहिं बंभधम्मेहिं ।
काउस्सग्गं ठामिय तं कम्मणिघादणट्ठाए १५७

षड्जीवनिकायैः भयमदस्थानैः ब्रह्मधर्मे ।
कायोत्सर्गं अधितिष्ठामि तत्कर्मनिघातनार्थं ॥ १५७

षड्जीवनिकायैः पृथिव्यादिकायविराधनद्वारेण यो व्यतिक्रमस्तथा भयमदस्थानैः सप्तभयाष्टमदद्वारेण यो व्यतिक्रमस्तथा ब्रह्मचर्यविषये यो व्यतिक्रमस्तेनाऽऽगतं यत्कर्मैकप-

दाधाश्रितस्य गुप्त्यादिव्यतिक्रमेण च यत्कर्म तस्य कर्मणो निघातनाय कायोत्सर्गमधितिष्ठामि कायोत्सर्गेण तिष्ठामीति संबन्धः, अथ वैकपदस्थितस्यापि रागद्वेषाभ्यामतीचारो भवति यतः किं पुनर्भ्रमति ततो घातनार्थं कर्मणां तिष्ठामीति ॥ १५७ ॥

पुनरपि कायोत्सर्गकारणमाह;—

जे केई उवसग्गा देवमाणुसतिरिक्खचेदणिया ।
ते सव्वे अधिआसे काओसग्गे ठिदो संतो ॥

ये केचन उपसर्गा देवमानुषतिर्यगचेतानिकाः ।
तान् सर्वान् अध्यासे कायोत्सर्गे स्थितः सन्॥ १५८

ये केचनोपसर्गा देवमनुष्यतिर्यक्कृता अचेतना विद्युदशन्यादयस्तान् सर्वानध्यासे सम्यग्विधानेन सहेऽहं कायोत्सर्गे स्थितः सन्, उपसर्गेष्वागतेषु कायोत्सर्गः कर्त्तव्यः कायोत्सर्गेण वा स्थितस्य यद्युपसर्गाः समुपस्थिताः भवन्ति तेऽपि सहनीया इति ॥ १५८ ॥

कायोत्सर्गप्रमाणमाह;—

संवच्छरमुक्कस्सं भिण्णमुहुत्तं जहण्णयं होदि ।
सेसा काओसग्गा होंति अणेगेसु ठाणेसु ॥ १५९

संवत्सरमुत्कृष्टं भिन्नमुहूर्तं जघन्यं भवति ।
शेषाः कायोत्सर्गा भवंति अनेकेषु स्थानेषु ॥१५९॥

संवत्सरं द्वादशमासमात्रं उत्कृष्टं प्रमाणं कायोत्सर्गस्य जघन्येन प्रमाणं कायोत्सर्गस्यान्तर्मुहूर्तमात्रं संवत्सरान्तर्मुहूर्त्तमध्येऽनेकविकल्पा दिवसरात्र्यहोरात्रभेदभिन्नाः शेषाः कायोत्सर्गा अनेकेषु स्थानेषु बहुस्थानविशेषेषु शक्त्यपेक्षया कार्याः, कालद्रव्यक्षेत्रभावकायोत्सर्गविकल्पा भवंतीति १५९

दैवसिकादिप्रतिक्रमणे कायोत्सर्गस्य प्रमाणमाह,—

अट्ठसदं देवसियं कल्लद्धं पक्खियं च तिण्णिसया
उस्सासा कायव्वा णियमंते अप्पमत्तेण ॥१६०॥
अष्टशतं दैवसिकं कल्येऽर्धं पाक्षिकं च त्रीणि शतानि
उच्छ्वासाः कर्तव्या नियमांते अप्रमत्तेन ॥१६० ॥

अष्टभिरधिकं शतमष्टोत्तरशतं दैवसिके प्रतिक्रमणे दैवसिकप्रतिक्रमणविषये कायोत्सर्गे उच्छ्वासानामष्टोत्तरशतं कर्त्तव्यं कल्लद्धं रात्रिकप्रतिक्रमणविषयकायोत्सर्गे चतुःपंचाशदुच्छ्वासाः कर्त्तव्याः पाक्षिके च प्रतिक्रमणविषये कायोत्सर्गे त्रीणि शतानि उच्छ्वासाना चिन्तनीयानि ध्यातव्यानि विधेयानि नियमान्ते वीरभक्तिकायोत्सर्गकाले प्रमादरहितेन यत्नवता विशेषे सिद्धभक्तिप्रतिक्रमणभक्तिचतुर्विंशतितीर्थकर-

सप्तविंशतिरुच्छ्वासाः कर्तव्या इति ॥ १६० ॥

चातुर्मासिकसांवत्सरिककायोत्सर्गप्रमाणमाह—

चादुम्मासे चउरो सदाइं संवत्थरे य पंचसदा।
काओसग्गुस्सासा पंचसु ठाणेसु णादव्वा ॥

चातुर्मासिके चत्वारि शतानि संवत्सरे च पंचशतानि
कायोत्सर्गोच्छ्वासाः पंचसु स्थानेषु ज्ञातव्याः ॥

चातुर्मासिके प्रतिक्रमणे चत्वारि शतान्युच्छ्वासानां चिन्तनीयानि सांवत्सरिके च प्रतिक्रमणे पंचशतान्युच्छ्वासानां चिन्तनीयानि स्यातव्यानि नियमान्ते कायोत्सर्गप्रमाणमेतच्छेषेषु पूर्ववत् द्रष्टव्यः। एवं कायोत्सर्गोच्छ्वासाः पंचसु स्थानेषु ज्ञातव्याः ॥ १६१ ॥

शेषेषु स्थानेषूच्छ्वासप्रमाणमाह—

पाणिवह मुसावाए अदत्त मेहुण परिग्गहे चेय
अट्ठसदं उस्सासा काओसग्गह्मि कादव्वा ॥

प्राणिवधे मृषावादे अदत्ते मैथुने परिग्रहे चैव।
अष्टशतं उच्छ्वासाः कायोत्सर्गे कर्तव्याः ॥ १६२ ॥

प्राणिवधातीचारे मृषावादातीचारे अदत्तग्रहणातीचारे मैथुनातिचारे परिग्रहातीचारे च कायोत्सर्गे चोच्छ्वासाना-

मष्टोत्तरशतं कर्त्तव्यं नियमान्ते सर्वत्र द्रष्टव्यं शेषेषु पूर्ववदिति ॥ १६२ ॥

पुनरपि कायोत्सर्गप्रमाणमाह—

**भत्ते पाणे गामंतरे य अरहंतसमणसेज्जासु ।**
**उच्चारे पस्सवणे पणवीसं होंति उस्सासा ॥**

भक्ते पाने ग्रामांतरे च अर्हत्श्रमणशय्यायाम् ।
उच्चारे प्रस्रवणे पंचविंशतिः भवंति उच्छ्वासाः ॥

भक्ते पाने गोचरे प्रतिक्रमणविषये गोचरादागतस्य कायोत्सर्गे पंचविंशतिरुच्छ्वासाः कर्त्तव्या भवन्ति, प्रस्तुतात् ग्रामादन्यग्रामो ग्रामान्तरं ग्रामान्तरगमनविषये च कायोत्सर्गे च पंचविंशतिरुच्छ्वासाः कर्तव्यास्तथार्हच्छय्यायां जिनेन्द्रनिर्वाणसमवसृतिकेवलज्ञानोत्पत्तिनिष्क्रमणजन्मभूमिस्थानेषु वन्दनाभक्तिहेतोर्गतेन पंचविंशतिरुच्छ्वासाः कायोत्सर्गे कर्त्तव्याः । तथा श्रमणशय्यायां निषधिकास्थानं गत्वाऽऽगतेन पंचविंशतिरुच्छ्वासाः कायोत्सर्गे कर्त्तव्यास्तथोच्चारे वहिर्भूमिगमनं कृत्वा प्रस्रवणं प्रस्रवणं च कृत्वा यः कायोत्सर्गः क्रियते तत्र नियमेनेति ॥ १६३ ॥

तथा—

**उद्देसे णिद्देसे सज्झाए वंदणे य पणिधाणे ।**
**सत्तावीसुस्सासा काओसग्गम्हि कादव्वा ॥**

उद्देशे निर्देशे स्वाध्याये वंदनायां प्रणिधाने।
सप्तविंशतिरुच्छ्वासाः कायोत्सर्गे कर्तव्याः॥ १६४

उद्देशे ग्रन्थादिप्रारम्भकाले निर्देशे प्रारब्धग्रन्थादिसमाप्तौ च कायोत्सर्गे सप्तविंशतिरुच्छ्वासाः कर्त्तव्यास्तथा स्वाध्याये स्वाध्यायविषये कायोत्सर्गास्तेषु च सप्तविंशतिरुच्छ्वासाः कर्त्तव्यास्तथा वन्दनायां ये कायोत्सर्गास्तेषु च प्रणिधाने च मनोविकारे चाशुभपरिणामे तत्क्षणोत्पन्ने सप्तविंशतिरुच्छ्वासाः कायोत्सर्गे कर्त्तव्या इति॥ १६४॥

एवं प्रतिपादितक्रमे कायोत्सर्गे किमर्थमधितिष्ठन्तीत्याह—

काओसग्गं इरियावहादिचारस्स मोक्खमग्गम्मि
वोसट्ठचत्तदेहा करंति दुक्खक्खयट्ठाए॥
कायोत्सर्गं ईर्यापथातिचारस्य मोक्षमार्गे।
व्युत्सृष्टत्यक्तदेहाः कुर्वंति दुःखक्षयार्थं॥ १६५॥

ईर्यापथातीचारनिमित्तं कायोत्सर्गं मोक्षमार्गे स्थित्वा व्युत्सृष्टत्यक्तदेहाः सन्तः शुद्धाः कुर्वन्ति दुःखक्षयार्थमिति॥

तथा;—

भत्ते पाणे गामंतरे य चदुमासिवरिसचरिमेसु।
णाऊण ठंति धीरा घणिदं दुक्खक्खयट्ठाए॥

भक्तं पानं ग्रामांतरं च चातुर्मासिकवार्षिकचरमान् ।
ज्ञात्वा तिष्ठंति धीरा अत्यर्थं दुःखक्षयार्थम् ॥ १६६ ॥

भक्तपानग्रामान्तरचातुर्मासिकसांवत्सरिकचरमोत्तमार्थ-विषयं ज्ञात्वा कायोत्सर्गे तिष्ठति दैवसिकादिषु च धीरा अत्य-र्थं दुःखक्षयार्थं नान्येन कार्येणेति ॥ १६६ ॥

यदर्थं कायोत्सर्गं करोति तमेवार्थं चिन्तयतीत्याह;—

काओसग्गह्मि ठिदो चिंतिदु
इरियावधस्स अतिचारं ।
तं सव्वं समाणित्ता
धम्मं सुक्कं च चिंतेज्जो ॥

कायोत्सर्गे स्थितः चिंतयन् ईर्यापथस्य अतीचारं ।
तं सर्वं समानीय धर्मं शुक्लं च चिंतयतु ॥ १६७ ॥

कायोत्सर्गे स्थितः सन् ईर्यापथस्यातीचारं विनाशं चिन्त-यन् तं नियमं सर्वं निरवशेषं समाप्य समाप्तिं नीत्वा पश्चा-द्धर्मध्यानं शुक्लध्यानं च चिन्तयत्विति ॥ १६७ ॥

तथा;—

तह दिवसियरादियप-
क्खियचदुमासिवरिसचरिमेसु ।

तं सव्वं समाणित्ता
धम्मं सुक्कं च झायेज्जो ॥ १६८ ॥
तथा दैवसिकरात्रिकपाक्षिकचतुर्मासवर्षचरमान् ।
तं सर्वं समाप्य धर्मं शुक्लं च ध्यायेत् ॥ १६८ ॥

एवं यथा ईर्यापथातीचारार्थं दैवसिकरात्रिकपाक्षिकचातुर्मासिकसांवत्सरिकोत्तमार्थान् नियमान् तान् समाप्य धर्मध्यानं शुक्लध्यानं ध्यायेत्, न तावन्मात्रेण तिष्ठेदित्यनेनालस्याद्यभावः कथितो भवतीति ॥ १६८ ॥

कायोत्सर्गस्य दृष्टं फलमाह;—

काओसग्गह्मि कदे जह भिज्जदि अंगुवंगसंधीओ
तह भिज्जदि कम्मरयं काउस्सग्गस्स करणेण ॥
कायोत्सर्गे कृते यथा भिद्यते अंगोपांगसंधयः ।
तथा भिद्यते कर्मरजः कायोत्सर्गस्य करणेन ॥ १६९

कायोत्सर्गे हि स्फुट कृते यथा भिद्यन्तेऽगोपांगसंधयः शरीरावयवास्तथा भिद्यते कर्मरजः कायोत्सर्गकरणेनेति १६९

द्रव्यादि चतुष्टयापेक्षामाह,— —;

बलवीरियमासेज्ज य खेत्ते काले सरीरसंहडणं ।
काओसग्गं कुज्जा इमे दु दोसे परिहरंतो ॥ १७०

बलवीर्यमासाद्य च क्षेत्रं कालं शरीरसंहननं ।
कायोत्सर्गं कुर्यात् इमांस्तु दोषान् परिहरन् ॥१७०॥

बलवीर्यं चौषधाद्याहारशक्तिं वीर्यान्तरायक्षयोपशमं वाऽऽश्रित्य क्षेत्रबलं कालबलं चाश्रित्य शरीरं व्याध्यनुपहतसंहननवज्रर्षभनाराचादिकमपेक्ष्य कायोत्सर्गं कुर्यात्, इमांस्तु कथ्यमानान् दोषान्परिहरन्निति ॥ १७० ॥

तान् दोषानाह;—

घोडय लदा य खंभे कुड्डे माले सवरबधू णिगले
लंबुत्तरथणदिट्ठी वायस खलिणे जुग कविट्ठे ॥
घोटको लता च स्तंभः कुड्यं माला शवरबधूर्निगडः
लंबोत्तरः स्तनदृष्टिः वायसः खलिनं युगं कपित्थं ॥

घोटकस्तुरगः स यथा एकं पादमुत्क्षिप्य विनम्य वा तिष्ठति तथा यः कायोत्सर्गेण तिष्ठति तस्य घोटकसदृशो घोटकदोषः, तथा लता इवांगानि चालयन्यः तिष्ठति कायोत्सर्गेण तस्य लतादोषः, स्तंभमाश्रित्य यस्तिष्ठति कायोत्सर्गेण तस्य स्तंभदोषः स्तंभवत् शून्यहृदयो वा तत्साहचर्येण स एवोच्यते तथा कुड्यमाश्रित्य कायोत्सर्गेण यस्तिष्ठति तस्य कुड्यदोषः साहचर्यादुपलक्षणमात्रमेतदन्यदप्याश्रित्य न स्यातव्यमिति ज्ञापयति, तथा मालापीठाद्युपरि स्थानं अथ वा मस्तकादूर्ध्वं यत्तदाश्रित्य मस्तकस्योपरि यदि किंचिदत्र ग-

तिस्तयापि यदि कायोत्सर्गः क्रियते स मालदोषः, तथा शबरवधूरिव जंघाभ्यां जघने निपीडय कायोत्सर्गेण तिष्ठति तस्य शवरवधूदोषः, तथा निगडपीडित इव पादयोर्महदन्तरालं कृत्वा यस्तिष्ठति कायोत्सर्गेण तस्य निगडदोषः, तथा लंबमानो नाभेरूर्ध्वभागो भवति वा कायोत्सर्गस्थस्योन्नमनमधोनमनं वा च भवति तस्य लंबोत्तरदोषो भवति तथा यस्य कायोत्सर्गस्थस्य स्तनयोर्दृष्टिरात्मीयौ स्तनौ यः पश्यति तस्य स्तनदृष्टिनामा दोषः तथा यः कायोत्सर्गस्थो वायस इव काक इव पार्श्वं पश्यति तस्य वायसदोषस्तथा यः खलीनपीडितोऽश्व इव दन्तकटकटं मस्तकं कृत्वा कायोत्सर्गं करोति तस्य खलीनदोषः, तथा यो युगनिपीडितवलीवर्दवत् ग्रीवां प्रसार्य तिष्ठति कायोत्सर्गेण तस्य युगदोषः, तथा यः कपित्थफलवन्मुष्टिं कृत्वा कायोत्सर्गेण तिष्ठति तस्य कपित्थदोषः १७१

तथा—

**सीसपकंपिय मुइयं**
**अंगुलि भूविकार वारुणीपेयी ।**
**काओसग्गेण ठिदो**
**एदे दोसे परिहरेज्जो ॥ १७२ ॥**

शिरःप्रकंपितं मूकत्वं
अंगुलिभ्रूविकारः वारुणीपायी ।

कायोत्सर्गेण स्थितः

एतान् दोषान् परिहरेत् ॥ १७२ ॥

शिरःप्रकंपितं कायोत्सर्गेण स्थितो यः शिरः प्रकंपयति चालयति तस्य शिरःप्रकंपितदोषः, मूक इव कायोत्सर्गेण स्थितो मुखविकारं नासिकाविकारं च करोति तस्य मूकितदोषः, तथा यः कायोत्सर्गेण स्थितोऽङ्गुलिगणनां करोति तस्यांगुलिदोषः, तथा भ्रूविकारः कायोत्सर्गेण स्थितो यो भ्रूविक्षेपं करोति तस्य भ्रूविकारदोषः पादांगुलिनर्तनं वा, वारुणीपायीव-सुरापायी चेति घूर्णमानः कायोत्सर्गं करोति तस्य वारुणीपायीदोषः, तस्मादेतान् दोषान् कायोत्सर्गेण स्थितः सन परिहरेद्वर्जयेदिति ॥ १७२ ॥

तथेमांश्च दोषान् परिहरेदित्याह——

आलोगणं दिसाणं गीवाउण्णामणं पणवणं च ।
णिट्ठीवणंगमरिसो काउसग्गह्मि वज्जिज्जो ॥

आलोकनं दिशानां ग्रीवोन्नमनं प्रणमनं च ।
निष्ठीवनमंगामर्शं कायोत्सर्गे वर्जयेत् ॥ १७३ ॥

कायोत्सर्गेण स्थितो दिशामालोकनं वर्जयेत्, तथा कायोत्सर्गेण स्थितो ग्रीवोन्नमनं वर्जयेत् तथा कायोत्सर्गेण स्थितः सन् प्रणमनं च वर्जयेत्, तथा कायोत्सर्गेण स्थितो

निष्ठीवनं पादकरणं च वर्जयेत् तथा कायोत्सर्गेण स्थितोऽगामर्श शरीरपरामर्श वर्जयेदेतेऽपि दोषाः सन्त्यतो वर्जनीयाः दशाना दिशामवलोकनानि दश दोषाः, शेषा एकैका इति ॥

यथा यथोक्तं कायोत्सर्गं कुर्वन्ति तथाह—

णिक्कूडं सविसेसं बलाणुरूवं वयाणुरूवं च ।
काओसग्गं धीरा करंति दुक्खक्खयट्ठाए ॥१७४॥

निःकूटं सविशेषं बलानुरूपं वयोनुरूपं च ।
कायोत्सर्गं धीराः कुर्वंति दुःखक्षयार्थम् ॥ १७४ ॥

निःकूटं मायाप्रपंचान्निर्गतं, सह विशेषेण वर्तत इति सविशेषस्तं सविशेषं विशेषतासमन्वितं बलानुरूपं स्वशक्त्यनुरूपं, वयोऽनुरूपं, बालयौवनवार्द्धक्यानुरूपं तथा वीर्यानुरूपं कालानुरूपं च कायोत्सर्गं धीरा दुःखक्षयार्थं कुर्वन्ति तिष्ठन्तीति ॥ १७४ ॥

माया प्रदर्शयन्नाह——

जो पुण तीसदिवरिसो
सत्तरिवरिसेण पारणाय समो ।
विसमो य कूडवादी
णिव्विण्णाणी य सोय जडो ॥ १७५॥

यःपुनः त्रिंशद्वर्षः सप्ततिवर्षेण पारणेन समः ।

विषमश्च कूटवादी निर्विज्ञानी च स च जडः ॥१७५॥

यः पुनस्त्रिशद्वर्षप्रमाणो यौवनस्थः शक्तः सप्ततिसंवत्सरेण सप्ततिसंवत्सरायुःप्रमाणेन वृद्धेन निःशक्तिकेन पारणेनानुष्ठानेन कायोत्सर्गादिसमाप्त्या समः सदृशशक्तिको निःशक्तिकेन सह यः स्पर्द्धां करोति सः साधुर्विषमश्च शान्तरूपो न भवति कूटवादी मायाप्रपंचतत्परो निर्विज्ञानी विज्ञानरहितश्चारित्रमुक्तश्च जडश्च मूर्खो, न तस्येहलोको नाऽपि परलोक इति ॥ १७५ ॥

कायोत्सर्गस्य भेदानाह—

उट्ठिदउट्ठिद उट्ठिदणिविट्ठ उवविट्ठउट्ठिदो चेव ।
उवविट्ठणिविट्ठोवि य काओसग्गो चदुट्ठाणो ॥

उत्थितोत्थित उत्थितनिविष्ट उपविष्टोत्थितश्चैव ।
उपविष्टनिविष्टोऽपि च कायोत्सर्गः चतुःस्थानः ॥

उत्थितश्चासावुत्थितश्चोत्थितोत्थितो महतोऽपि महतः, तयोरुत्थितनिविष्टः पूर्वमुत्थितः पश्चान्निविष्ट उत्थितनिविष्टः, कायोत्सर्गेण स्थितोऽप्यसावासीनो दृष्टव्य उत्थितः, उपविष्टो भूत्वा स्थितो आसीनोऽप्यसौ कायोत्सर्गस्थश्चैव तथोपविष्टोऽपि चासावासीन एवं कायोत्सर्गः चत्वारि स्थानानि यस्यासौ चतुःस्थानश्चतुर्विकल्प इति ॥

उक्तं च—

त्यागो देहममत्वस्य तनूत्सृतिरुदाहृता ।
उपविष्टोपविष्टादिविभेदेन चतुर्विधा ॥ १ ॥
आर्त्तरौद्रद्वयं यस्यामुपविष्टेन चिन्त्यते ।
उपविष्टोपविष्टाख्या कथ्यते सा तनूत्सृतिः ॥ २ ॥
धर्मशुक्लद्वयं यत्रोपविष्टेन विधीयते ।
तामुत्थितोपविष्टांकां निगदंति महाधियः ॥ ३ ॥
आर्तरौद्रद्वय यस्यामुत्थितेन विधीयते ।
तामुत्थितोपविष्टांकां निगदंति महाधियः ॥ ४ ॥
धर्मशुक्लद्वयं यस्यामुत्थितेन विधीयते ।
उत्थितोत्थितनाम्ना तामामनन्ते विपश्चितः ॥ ५ ॥
उत्थितोत्थितकायोत्सर्गस्य लक्षणमाह—

**धम्मं सुक्कं च दुवे झायदि झाणाणि जो ठिदो संतो ।
एसो काओसग्गो इह उट्ठिदउट्ठिदो णाम ॥ १७७**

धर्मं शुक्लं च द्वे ध्यायति ध्याने यः स्थितः सन् ।
एष कायोत्सर्गः इह उत्थितोत्थितो नाम ॥ १७७ ॥

धर्म्यध्यानं शुक्लध्यानं द्वे ध्याने यः कायोत्सर्गस्थितः सन् ध्यायति तस्यैव इह कायोत्सर्गं उत्थितोत्थितो नामेति ॥

तयोत्थितनिविष्टकायोत्सर्गस्य लक्षणमाह—

**अट्टं रुद्दं च दुवे झायदि झाणाणि जो ठिदो संतो ।
एसो काओसग्गो उट्ठिदणिविट्ठिदो णाम ॥ १७८**

आर्तं रौद्रं च द्वे ध्यायति ध्याने यः स्थितः सन् ।
एष कायोत्सर्गः उत्थितनिविष्टो नाम ॥ १७८ ॥

आर्तध्यानं रौद्रध्यानं च द्वे ध्याने यः पर्यंककायोत्सर्गेण स्थितो ध्यायति तस्यैव कायोत्सर्ग उत्थितनिविष्टनामेति ॥ १७८ ॥

धम्मं सुक्कं च दुवे
झायदि झाणाणि जो णिसण्णो दु ।
एसो काओसग्गो
उवविट्ठउट्ठिदो णाम ॥ १७९ ॥

धर्मं शुक्लं च द्वे ध्यायति ध्याने यो निषण्णस्तु ।
एष कायोत्सर्गः उपविष्टोत्थितो नाम ॥ १७९ ॥

धर्म्यं शौक्ल्यं च द्वे ध्याने यो निविष्टो ध्यायति तस्यैव कायोत्सर्गं इहागमे उपविष्टोत्थितो नामेति ॥ १७९ ॥

उपविष्टोपविष्टकायोत्सर्गस्य लक्षणमाह—

अट्टं रुद्दं च दुवे
झायदि झाणाणि जो णिसण्णो दु ।
एसो काओसग्गो
णिसण्णिदणिसण्णिदो णाम ॥१८०॥

विद्याचरणमहाव्रतसमाधिगुणब्रह्मचर्यषट्कायेषु ।
क्षमानिग्रहार्जवमार्दवमुक्तिविनयेषु च श्रद्धाने ॥ १८२

विद्यायां द्वादशांगचतुर्दशपूर्वविषयः संकल्पः, आचरणे भिक्षाशुद्ध्यादिपरिणामः, महाव्रतेषु अहिंसादिविषयपरिणामः, समाधौ विषयसन्न्यसनेन पंचनमस्कारस्तवनपरिणामः, गुणेषु गुणविषयपरिणामः, ब्रह्मचर्ये मैथुनपरिहारविषयपरिणामः, षट्कायेषु पृथिवीकायादिरक्षणपरिणामः, क्षमायां क्रोधोपशमनविषयपरिणामः, निग्रहे इन्द्रियनिग्रहविषयोऽभिलाषः, आर्जवमार्दवविषयः परिणामः, मुक्तौ सर्वसंगपरित्यागविषयपरिणामः, विनयविषयः परिणामः, श्रद्धानविषयः परिणामः ॥ १८२ ॥

उपसंहरन्नाह,—

एवंगुणो महत्थो मणसकंप्पो पसत्थ वीसत्थो।
संकप्पोत्ति वियाणह जिणसासणसम्मदं सव्वं ॥

एवंगुणो महार्थः मनःसंकल्पः प्रशस्तो विश्वस्तः।
संकल्प इति विजानीहि जिनशासनसंमतं सर्वं ॥

एवंगुणः पूर्वोक्तः संकल्पो मनःपरिणामः महार्थः ... प्रशस्तः शोभनः विश्वस्तः सर्वेषां विश्वासयोग्यः संकल्प इति सम्यग्ज्ञानमिति विजानीहि जिनशासने स-

विद्याचरणमहाव्रतसमाधिगुणब्रह्मचर्यषट्कायेषु ।
क्षमानिग्रहार्जवमार्दवमुक्तिविनयेषु च श्रद्धाने ॥ १८२

विद्यायां द्वादशांगचतुर्दशपूर्वविषयः संकल्पः, आचरणे भिक्षाशुद्धयादिपरिणाम:, महाव्रतेषु अहिंसादिविषयपरिणामः, समाधौ विषयसन्यसनेन पंचनमस्कारस्तवनपरिणामः, गुणेषु गुणविषयपरिणामः, ब्रह्मचर्ये मैथुनपरिहारविषयपरिणामः, षट्कायेषु पृथिवीकायादिरक्षणपरिणामः, क्षमायां क्रोधोपशमनविषयपरिणामः, निग्रहे इन्द्रियनिग्रहविषयोऽभिलाषः, आर्जवमार्दवविषयः परिणामः, मुक्तौ सर्वसंगपरित्यागविषयपरिणामः, विनयविषयः परिणामः, श्रद्धानविषयः परिणामः ॥ १८२ ॥

उपसंहरन्नाह,—

एवंगुणो महत्थो मणसकंप्पो पसत्थ वीसत्थो।
संकप्पोत्ति वियाणह जिणसामणसम्मदं सव्वं ॥

एवगुणो महार्थः मनःसकल्पः प्रशस्तो विश्वस्तः ।
संकल्प इति विजानीहि जिनशासनसंमतं सर्वं ॥

एवंगुणः पूर्वोक्तमनःसंकल्पो मनःपरिणामः महार्थः कर्मक्षयहेतुः प्रशस्तः शोभनो विश्वस्तः सर्वेषां विश्वासयोग्यः संकल्प इति सम्यग्ज्ञानमिति विजानीहि जिनशासने स-

आर्तं रौद्रं च द्वे ध्यायति ध्याने यः निषण्णस्तु ।
एष कायोत्सर्गः निषण्णितनिषण्णितो नाम ॥१८०॥

आर्तध्यानं रौद्रध्यानं च द्वे ध्याने यः पर्यंककायोत्सर्गेण स्थितो ध्यायति तस्यैष कायोत्सर्ग उपविष्टोपविष्टो नाम १८०

कायोत्सर्गेण स्थितः शुभं मनःसंकल्पं कुर्यात् परंतु कः शुभो मनःसंकल्प इत्याह;—

दंसणणाणचरित्ते उवओगे संजमे विउस्सग्गे ।
पच्चक्खाणे करणे पणिधाणे तह य समिदीसु ॥

दर्शनज्ञानचारित्रे उपयोगे संयमे व्युत्सर्गे ।
प्रत्याख्याने करणेषु प्रणिधाने तथा च समितिषु ॥

दर्शनज्ञानचारित्रेषु यो मनःसंकल्प उपयोगे ज्ञानदर्शनोपयोगे यश्चित्तव्यापारः संयमविषये यः परिणामः कायोत्सर्गस्य हेतोर्यत् ध्यानं प्रत्याख्यानग्रहणे यः परिणामः करणेषु पंचनमस्कारपडावश्यकासिकानिषधिकाविषये शुभयोगस्तथा प्रणिधानेषु धर्मध्यानादिविषयपरिणामः समितिषु समितिविषयः परिणामः ॥ १८१ ॥

तथा,—

विज्जाचरणमहव्वदसमाधिगुणबंभचेरछक्काए ।
खमणिग्गह अज्जवमद्दवमुत्तीविणए च सद्दहणे ॥

विद्याचरणमहाव्रतसमाधिगुणब्रह्मचर्यषट्कायेषु ।
क्षमानिग्रहार्जवमार्दवमुक्तिविनयेषु च श्रद्धाने ॥ १८२

विद्यायां द्वादशांगचतुर्दशपूर्वविषयः संकल्पः, आचरणे भिक्षाशुद्ध्यादिपरिणामः, महाव्रतेषु अहिंसादिविषयपरिणामः, समाधौ विषयसन्यसनेन पंचनमस्कारस्तवनपरिणामः, गुणेषु गुणविषयपरिणामः, ब्रह्मचर्ये मैथुनपरिहारविषयपरिणामः, षट्कायेषु पृथिवीकायादिरक्षणपरिणामः, क्षमायां क्रोधोपशमनविषयपरिणामः, निग्रहे इन्द्रियनिग्रहविषयोऽभिलाषः, आर्जवमार्दवविषयः परिणामः, मुक्तौ सर्वसंगपरित्यागविषयपरिणामः, विनयविषयः परिणामः, श्रद्धानविषयः परिणामः ॥ १८२ ॥

उपसंहरन्नाह,—

एवंगुणो महत्थो मणसंकप्पो पसत्थ वीसत्थो।
संकप्पोत्ति वियाणह जिणसासणसम्मदं सव्वं ॥

एवंगुणो महार्थः मनःसंकल्पः प्रशस्तो विश्वस्तः ।
संकल्प इति विजानीहि जिनशासनसंमतं सर्वं ॥

[illegible] एवंगुणः पूर्वोक्तगुणः संकल्पो मनःपरिणामः [illegible] महार्थः [illegible]
[illegible] विश्वस्तः [illegible] सर्वेषां विश्वासयोग्यः
[illegible] इति [illegible] विजानीहि जिनशासने स[illegible]

स्मृतं सर्वं समस्तमिति, एवंविशिष्टं ध्यानं कायोत्सर्गेण स्थितस्य योग्यमिति ॥ १८३ ॥

अप्रशस्तमाह,—

**परिवारइड्ढिसक्कारपूयणं असणपाणहेऊ वा ।**
**लयणसयणासणं भत्तपाणकामट्ठहेऊ वा ॥ १८४**

पारिवारऋद्धिसत्कारपूजनं अशनपानहेतोर्वा ।
लयनशयनासनभक्तपानकामार्थहेतोर्वा ॥ १८४ ॥

परिवारः पुत्रकलत्रादिकः शिष्यसामान्यसाधुश्रावकादिकः ऋद्धिर्विभूतिर्हस्त्यश्वद्रव्यादिकस्य सत्कारः कार्यादिष्वग्रतः करणं पूजनमर्चनं अशनं भक्तादिकं पानं सुगन्धजलादिकं हेतुः कारणं वा विकल्पार्थः, लयनं उत्कीर्णपर्वतप्रदेशः शयनं पर्यंकतूलिकादिकं आसनं वेत्रासनादिकं भक्तो भक्तियुक्तो जन आत्मभक्तिर्वा प्राणः सामर्थ्यं दशप्रकाराः प्राणा वा कामो मैथुनेच्छा अर्थो द्रव्यादिप्रयोजनं, इत्येवंकारणेन कायोत्सर्गं यः करोति परिवारनिमित्तं विभूतिनिमित्तं सत्कारपूजानिमित्तं चाशनपाननिमित्तं वा लयनासननिमित्त मम भक्तो जनो भवत्विति मदीया भक्तिर्वा ख्यातिं गच्छत्विति मदीयं प्राणसामर्थ्यं लोको जानातु मम प्राणरक्षको देवो वा मनुष्यो वा भवत्विति हेतो यः कायोत्सर्गं करोति, कामहेतुरर्थहेतुश्च यः कायोत्सर्गः स सर्वोऽप्यप्रशस्तो मनःसंकल्प इति ॥ १८४ ॥

तथा—

आणाणिद्देसपमाणकित्तिवण्णणपहावणगुणट्ठं ।
झाणमिणमप्पसत्थं मणसंकप्पो दु वीसत्थो १८५

आज्ञानिर्देशप्रमाणकीर्तिवर्णनप्रभावनगुणार्थं ।
ध्यानमिदमप्रशस्तं मनःसंकल्पस्तु विश्वस्तः ॥१८५

आज्ञा आदेशमन्तरेण नीत्वा वचनं निर्देशः आदेशो वचनस्यानन्यथा करणं प्रमाणं सर्वत्र प्रमाणीकरणं कीर्तिः ख्यातिस्तया वर्णनं प्रशंसनं प्रभावनं प्रकाशनं गुणाः शास्त्रज्ञातृत्वादयोऽर्थः प्रयोजनं, आज्ञां मम सर्वोऽपि करोतु निर्देशं मम सर्वोऽपि करोतु प्रमाणीभूतं मां सर्वोऽपि करोतु मम कीर्तिवर्णनं सर्वोऽपि करोतु मां प्रभावयन्तु सर्वेऽपि मदीयान् गुणान् सर्वेऽपि विस्तारयन्त्वित्यर्थं कायोत्सर्गो ध्यानमिदमप्रशस्तमेवंविधो मनःसंकल्पोऽविश्वस्तोऽविश्वसनीयो न चिन्तनीयोऽप्रशस्तो यत इति ॥ १८५ ॥

कायोत्सर्गनिर्युक्तिमुपसंहरन्नाह;—

काउस्सग्गणिज्जुत्ती एसा कहिया मए समासेण ।
संजमतवड्ढियाणं णिग्गंथाणं महारिसीणं ।१८६।

कायोत्सर्गनिर्युक्तिः एषा कथिता मया समासेन ।
संयमतपऋद्धिकानां निर्ग्रंथानां महर्षीणां ॥ १८६॥

कायोत्सर्गनिर्युक्तिरेषा कथिता मया समासेन, संयमतपोवृद्धिमिच्छतां निर्ग्रन्थानां महर्षीणामिति, नात्र पौनरुक्त्यमाशंकनीय द्रव्यार्थिकपर्यायार्थिकशिष्यसंग्रहणात्सूत्रवार्तिकस्वरूपेण कथनाच्चेति ॥ १८६ ॥

षडावश्यकचूलिकामाह—

**सव्वावासणिजुत्तो णियमा सिद्धोत्ति होइ णायव्वो ।**
**अह णिस्सेसं कुणदि ण णियमा आवासया होंति ॥**

सर्वावश्यकानिर्युक्तः नियमात्
सिद्ध इति भवति ज्ञातव्यः ।
अथ निश्शेषाणि करोति
न नियमात् आवासका भवंति ॥ १८७ ॥

आवश्यकानां फलमाह,—अनया गयया सर्वैरावश्यकैर्निर्युक्तः संपूर्णैरस्खलितैः संयताद्यावश्यकैरुद्युक्तः परिणवो नियमात् निश्चयेन सिद्ध इति भवति ज्ञातव्यो भाविनि वर्तमानबहुप्रचारोऽन्तर्मुहूर्तादूर्ध्वं सिद्धो भवति, अथ वा सिद्ध एव सर्वावश्यकैर्युक्तः सपूर्णो नान्य इति, अथ पुनः शेषात् स्तोकाद्[illegible] [illegible] स्तोकाद्[illegible] [illegible]णि न संपूर्णानि करोत्यावश्यकानि तदा तस्य नियमान्निश्चयात् आवासिकः स्वर्गाद्यावासा भवन्ति क्षेमेव भवेन न मोक्षः [illegible]

कर्मक्षयसमर्थः स्यात्, अथ निर्विशेषान्नियमाच्छैथिल्यभावेन करोति तदा तस्य यतेर्नियमाः समतादिक्रिया आवासयंति प्रच्छादयतीति आवासकाः प्रच्छादकाः नियमाद्भवन्तीत्यर्थः। अथ वा संसारे आवासयंति स्थापयंतीत्यर्थः ॥ १८७ ॥

अथ वाऽऽवासकानामयमर्थ इत्याह;—

आवासयं तु आवसएसु सव्वेसु अपरिहीणेसु ।
मणवयणकायगुत्तिंदियस्स आवासया होंति ॥
आवासनं तु आवश्यकेषु सर्वेषु अपरिहीनेषु ।
मनोवचकायगुप्तेंद्रियस्य आवश्यका भवंति ॥ १८८

मनोवचनकायैर्गुप्तानींद्रियाणि यस्यासौ मनोवचनकायगुप्तेन्द्रियस्तस्य मनोवचनकायगुप्तेन्द्रियस्य सर्वेष्वावश्यकेष्वपरिहीणेष्वावासनमवस्थानं यत्तेन आवश्यकाः साधोर्भवंति परमार्थतोऽन्ये पुनरावामकाः कर्मागमहेतव एवेति, अथ वा आवासयंतु इति प्रश्नवचनं, आवश्यकानि संपूर्णानि कथंभूतस्य पुरुषस्य भवंतीति प्रश्ने तत आह— सर्वेषु चापरिहीणेषु मनोवचनकायगुप्तेन्द्रियावश्यकानि भवन्तीति निर्देशः कृत इति ॥ १८८ ॥

आवश्यककरणविधानमाह;—

तियरण सव्वविसुद्धो दव्वे खेत्ते यथुत्तकालह्मि ।
मोणेणव्वाखित्तो कुज्जा आवासया णिच्चं ॥१८९॥

त्रिकरणैः सर्वविशुद्धः द्रव्ये क्षेत्रे यथोक्तकाले ।
मौनेनाव्याक्षिप्तः कुर्यादावश्यकानि नित्यं ॥ १८९ ॥

त्रिकरणैर्मनोवचनकायैः सर्वथा शुद्धो द्रव्यविषये क्षेत्रविषये यथोक्तकाले आवश्यकानि नित्यं मौनेनाव्याक्षिप्तः सन् कुर्याद्यतिरिति ॥ १८९ ॥

अथासिकानिषिद्यकयोः किंलक्षणमित्याशंकायामाह;—

जो होदि णिसीदप्पा
णिसीहिया तस्स भावदो होदि ।
अणिसिद्धस्स णिसीहिय-
सद्दो हवदि केवलं तस्स ॥ १९० ॥

यो भवति निसितात्मा
निषिद्यका तस्य भावतो भवति ।
आनिसितस्य निषिधकाशब्दो
भवति केवलं तस्य ॥ १९० ॥

यो भवति निसितो बद्ध आत्मपरिणामो येनासौ निसितात्मा निगृहीतेन्द्रियकषायचित्तादिपरिणामोऽसौ निसितात्माऽथ वा निषिद्धात्मा सर्वथा नियमितमतिस्तस्य भावतो निषिद्यका भवति अनिषिद्धस्य स्वेच्छाप्रवृत्तस्यानिषिद्धात्म-

नश्चलचित्तस्य कपायादिवशवर्तिनो निषिद्धकाशब्दो भवति केवलं शब्दमात्रकरणं तस्येति ॥ १९० ॥

आसिकार्थमाह;—

**आसाए विप्पमुक्कस्स आसिया होदि भावदो ।**
**आसाए अविप्पमुक्कस्स सद्दो हवदि केवलं ॥**

**आशया विप्रमुक्तस्य आसिका भवति भावतः ।**
**आशया अविप्रमुक्तस्य शब्दो भवति केवलं॥ १९१**

आशया कांक्षया विविधप्रकारेण मुक्तस्य आसिका भवति भावतः परमार्थतः, आशया पुनरविप्रमुक्तस्यासिकाकरणं शब्दो भवति केवलं, किमर्थमासिकानिषिद्धकयोरत्र निरूपणमिति चेन्न त्रयोदशकरणमध्ये पठितत्वात्, यथाऽत्र पंचनमस्कारनिरूपणं षडावश्यकानां च निरूपणं कृतमेवमनयोरप्यधिकारात् भवतीति नामस्थाने निरूपणमनयोरिति ॥ १९१ ॥

चूलिकामुपसंहरन्नाह;—

**णिज्जुत्ती णिज्जुत्ती एसा कहिदा मए समासेण**
**अह वित्थारपसंगोऽणियोगदो होदि णादव्वो ॥**

**निर्युक्तेर्निर्युक्तिः एषा कथिता मया समासेन ।**
**अथ विस्तारप्रसंगो अनियोगात् भवति ज्ञातव्यः॥**

निर्युक्तेर्निर्युक्तिरावश्यकचूलिकावश्यकनिर्युक्तिरेषा कृ-

यिता मया समासेन संक्षेपेणार्थविस्तारप्रसंगोऽनियोगादाचारांगाद्भवति ज्ञातव्य इति ॥ १९२ ॥

आवश्यकनिर्युक्तिं सचूलिकामुपसंहरन्नाह—

**आवासयाणिज्जुत्ती एवं कधिदा समासओ विहिणा।**
**जो उवजुंजदि णिच्चं सो सिद्धिं जादि विसुद्धप्पा ॥**

आवश्यकनिर्युक्तिः एवं कथिता समासतो विधिना।
यः उपयुंक्ते नित्यं सः सिद्धिं याति विशुद्धात्मा ॥

आवश्यकनिर्युक्तिरेवंप्रकारेण कथिता समासतः संक्षेपतो विधिना, तां य उपयुंक्ते समाचरति नित्यं सर्वकालं स सिद्धिं याति विशुद्धात्मा सर्वकर्मनिर्मुक्त इति ॥ १९३ ॥

इति श्रीवट्टेरकाचार्यवर्यप्रणीतमूलाचारस्य वसुनंद्याचार्यविरचितायामाचारवृत्तावावश्यकानिर्युक्तिनामकः सप्तमः परिच्छेदः ॥ ७ ॥

